THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

No 24.

---

# The

# RĀMATĀPINĪYOPANIṢAD

with

Commentaries by Ānandavana

GOVERNMENT SANSKRIT LIBRARY,

BENARES.

---

1927



Price, Rs. 3-12-0.

THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

*No 24*

—o—

EDITED BY

GOPĪ NĀTHA KAVIRĀJA



THE

# RĀMATĀPINĪYOPANIṢAD

*With Commentaries by Ānandavana*



*Printed by Jai Krishna Das Gupta*

*At the Vidya Vilas Press, Gopal Mandir Lane,*

*Benares City.*



1927

# रामतापिनीयोपनिषत्

श्रीमदानन्दवनकृतव्याख्यासहिता

THE

# RĀMATĀPINĪYOPANIṢAD

With Rāmakāśikā (on Pūrvatāpinīya)
and Ânandanidhi (on Uttaratāpinīya)
by Ânanda Vana.

Edited with Introduction etc.

BY

Ananta Rāma S'āstrī Vetāl Sāhityāchārya,
Research Scholar, Govt. Sanskrit College, Benares.

With a Foreword by

PANDIT GOPINATH KAVIRAJ, M. A.,
Principal, Govt. Sanskrit College,
Benares.

Government Sanskrit Library,
Sarasvatī Bhavana, Benares.

1927

॥ श्रीः ॥

# सूचीपत्रम् ।


१ Foreword ... ... ... ... ... १–२

२ भूमिका ... ... ... ... ... १–३२

उपक्रमः १, उपनिषत्पदार्थविवेचनम् १–४, उपनिषद्विभाग-प्रदर्शनम् ४–६, उपनिषदामनुबन्धचतुष्टयम् ६–७, श्रीराम-चन्द्रावतारविचारः ७–१५, श्रीरामोपासनाविचारः १५–१७, प्रस्तुतग्रन्थालोचनम् १७–२७, ग्रन्थकर्तुः समयादिनिर्णयः २७–३०, आदर्शपुस्तकविवरणम् ३०–३१, उप-संहारः ३१–३२,

३ विषयसूची ... ... ... ... ... १–१६

४ रामकाशिकासहितश्रीरामपूर्वतापिनी ... ... ... १–१०९

५ आनन्दनिधिसहितश्रीरामोत्तरतापिनी ... ... ... १११–१७७

६ श्रीरामतापिनीयोपनिषत्परिशिष्टम् ... ... ... १७७–१८१

७ पूजनयन्त्रम् ( श्रीरामस्य ) ... ... ... १

८ धारणयन्त्रम् ( श्रीरामस्य ) ... ... ... १

९ रामतापिनीयतत्तत्पुस्तकपाठसङ्ग्रहः ... ... ... १–११

१० उत्तरतापिनीयव्याख्यायां गपुस्तकपाठान्तराणि ... ... १–२

११ उत्तरतापिनीयव्याख्यायां घपुस्तकपाठान्तराणि ... ... १–३

१२ रामतापिन्युपनिषत्पद्यानां वर्णानुक्रमणिका ... ... १–५

१३ व्याख्यायां सङ्गृहीतानां श्रुतीनां सूची ... ... १–५

१४ टीकायामुद्धृतानां श्लोकानां सूचीपत्रम् ... ... १–५

१५ व्याख्यायामुपन्यस्तानां ग्रन्थग्रन्थकाराणां नामानि ... ... १–३

१६ संशोधनपत्रम् ... ... ... ... १–११

# FOREWORD

To a cursory reader of Indian Religion it would appear that a revised edition of the Upaniṣads, especially those which are more or less of a sectarian character, and a faithful interpretation of their contents, are indispensable for advanced studies. The so-called minor Upaniṣads, otherwise known as the Âtharvaṇa Upaniṣads, though comparatively modern in growth, are of abounding interest from this point of view. The history of the religious sects of India and of its religious philosophy, cannot be properly written without a careful study of the contents of these works.

The following pages contain the text of Rāma-ṭāpanīya Upaniṣad, one of the most popular Vaiṣṇava Upaniṣads of the Rāmāite School, accompanied in both of its sections (Pūrva & Uttara) by the commentary of one Ânanda Vana. Though the text of the Upaniṣad has been published in different parts of the country more than once, the importance of the commentary, which is published here for the time I believe, is unique. It will be a valuable companion to the sister works of Nārāyaṇa Tīrtha, Upaniṣad Brahma Yogī and others already published.

The Pūrvabhāga of the work contains 5 Upaniṣads and the Uttarabhāga has 5 kaṇḍikās. The Tantrik character of the book asserts itself most prominently on every page of it. The repetition of Mantra and the worship of Yantra (Diagram) have been emphasised. The six-syllabled mantra of Rāma and the mode of

drawing the Yantra sacred to him Have also been clearly expounded.

The edition of the commentry is based on the following Mss :

*A*. Manuscript marked क, belonging to the Govt. Sanskrit Library, Benares. This contains both the Pūrva and the Uttara Sections. Size: 13′-3″ × 6′-3″ for the Pūrvatāpinī: fols. 1—41; lines 12 per page and letters 52 per line. Script: Nāgarī. For the Uttaratāpinī: fols. 1—19; lines 12 per page and letters 52 per line. Script: Nāgarī. The Ms is full of errors of the scribe.

*B*. Manuscript of Uttaratāpinī marked ख, belonging to the private collection of the Editor. Size: 8′-9″ × 3′-8″. Fols : 1—37. There is no break in pagination, but some leaves are wanting after fol. 4. Lines 8 per page and letters 95 per line. Correct. Script: Nāgarī.

*C*. Manuscript ग (of the Uttaratāpinī) of the Govt. Sanskrit Library, Benares. Size: 12′-8″ × 5′-0″. Fols: 1—26. Lines 11 per page and letters 37 per line. Generally correct. Script: Bengali.

*D*. Manuscript घ ( of the Uttaratāpinī ) belonging to Pandit Vaidya Nātha Vyāsa of Benares. Size: 9′-5″ × 5-′1″. Fols : 1—19. Lines 15 per page and letters 42 per line. Correct. Script: Nāgarī.

The var. lect. furnished by the last two Mss have been appended at the end.

GOVERNMENT SANSKRIT COLLEGE, } GOPINATH KAVIRAJ
*BENARES.*

॥ श्रीः ॥

# भूमिका ।



## उपक्रमः ।

अथैष प्रकाश्यते परमहंसपरिव्राजकाचार्येण श्रीआनन्दवनेन विरचितो वेदान्तशास्त्रीयः प्रबन्धो रामतापिन्युपनिषद्व्याख्यानरूपः समूलो मुद्रयित्वा । सतीष्वपि नारायणतीर्थादिभिर्निर्मितासु द्वित्रासु दीपिकाप्रभृतिषु व्याख्यासु ताभ्यो विशेषं प्रतिपादयन्ती क्वचित्क्वचिच्च वैलक्षण्यमावहन्तीयं व्याख्या यथाप्रसङ्गं परपक्षान्पूर्वपक्षीकृत्य सप्रपञ्चं वेदान्ताभिमतान् श्रुतिसिद्धान् सिद्धान्तान् सप्रमाणमुत्तरपक्षीकृत्य च युक्त्या निपुणतया तथा निरमायि, यथा गहना अपि शास्त्रीया विषयाः सुगमतया सुस्पष्टमवगता भवेयुः सर्वेषाम् । वक्तव्यमत्र विषये ग्रन्थसमालोचनप्रसङ्गे वक्ष्यत इति तत्साम्प्रतमुपेक्ष्यकोटौ निक्षिप्य उपनिषद् वेदान्तशास्त्रान्तर्गतेति प्रसिद्धौ मूलान्वेषणपूर्वमुपनिषत्पदार्थनिरूपणेन तत्स्वरूपप्रभेदादिमीमांसनं संक्षेपतः प्रस्तूयते ।

## उपनिषत्पदार्थविवेचनम् ।

मनुना किल 'वेदोऽखिलो धर्ममूल'मित्यादिना श्रुतिस्मृतिप्रोक्तधर्मानुष्ठानमुपदिश्य

'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' ।

'वेदमेव सदाऽभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः ।

वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' ॥

इत्यादिभिर्वचननिचयैः उक्तान्यथाकरणे प्रत्यवायप्रदर्शनपूर्वकं नित्यं साङ्गवेदाध्ययनं द्विजातीनामवश्यानुष्ठेयत्वेन प्रतिपादितम् । पोषयत्यमुमर्थं 'ब्राह्मणेन निष्कारणं षडङ्गो वेदो ध्येयो ज्ञेयश्चे'ति महाभाष्यकृता पतञ्जलिनोदाहृता श्रुतिरपि । तत्र 'वेदयती'ति व्युत्पत्त्या ब्रह्मज्ञानसाधनं संस्काररूपं धर्मं तद्भिन्नमधर्मं च बोधयन्वेदो हि धर्माधर्मयोर्ज्ञापको निगद्यते । स च वेदो मन्त्रब्राह्मणात्मकः । मन्त्रभागस्तावत्संहितात्मना प्रसिद्धः, ब्राह्मणभागस्य च 'विध्यर्थवादावारण्यकं' चेति विभागत्रयं समपद्यत । विध्यर्थवादाभ्यां क्रमेण कर्तव्यं कर्म तत्फलश्रुतिश्च प्रतिपाद्येते । आरण्यकं हि 'अरण्ये प्रोच्यमान'मित्यनुगतार्थतया अरण्ये तावदुपादिश्यते उपयुज्यते च । वेदविभागात्मनस्तस्यारण्यकस्य अन्तिमे भागे उपनिषत्प्रपञ्चितेति सा वेदान्तविद्येति व्यपदिश्यते । प्रधानतया सारभूतं वेदार्थं प्रतिपादयतीति वेदशिरोरूपामपि तां व्याहरन्ति तत्त्वविदः ।

विशरणाद्यर्थकादुपनिपूर्वात्सदेर्धातोः उपनिषदिति रूपं क्विप्प्रत्ययान्तं निष्पद्यते । तथाच तद्विद्यासेविनां संसारं विनाशयतीति अविद्यामवसादयति शिथिलयतीति वा विद्यैषा उपनिषदित्युच्यते । तद्ब्रह्म गमयतीति परमं श्रेयो निष्पादयतीत्यतोऽपि तामुपनिषदं व्याचक्षते । शब्दश्चैष मुख्यया वृत्त्या ब्रह्मविद्यायां प्रयुज्यते गौण्या च तत्प्रतिपादके ग्रन्थे । अतश्च ब्रह्मविद्याप्रतिपादिकाया उपनिषदोऽध्ययनमप्युपपद्यते । तदेतत्सर्वं प्रपञ्चितमाचार्यचरणैः 'सदेर्धातो'रित्यादिना 'ग्रन्थे तु भ-

क्त्ये'त्यन्तेन सन्दर्भेण काठकोपनिषद्भाष्यारम्भे। तैत्तिरीयोपनिषद्भाष्येऽपि ब्रह्मविद्यार्थोपनिषदारम्भप्रयोजनं प्रतिपाद्य 'उपनिषदिति विद्योच्यते, तत्सेविनां गर्भजन्मजरादिनिशातनात्तदवसादनाद्वा ब्रह्मणो वोपनिगमयितृत्वात् उपनिषण्णं वास्यां परं श्रेय इति। तदर्थत्वाद् ग्रन्थोऽप्युपनिषत्'इति निरूपितम्। मुण्डकभाष्योपक्रमे च 'य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तः, गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयत्यविद्यादिसंसारकारणं वा अत्यन्तमवसादयति विनाशयतीत्युपनिषत्। उपनिपूर्वस्य सदेरेवमर्थस्मरणात्' इति प्रतिपादितम्। 'सेयं ब्रह्मविद्या उपनिषच्छब्दवाच्या, तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्। उपनिपूर्वस्य सदेस्तदर्थत्वात्। तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते' इति बृहदारण्यकभाष्यस्याप्यारम्भे दृश्यते। पूर्वोत्तरतापिन्योर्व्याख्याया उपक्रमेऽपीत्थमेवार्थः प्रत्यपादि। तथाच शब्दार्थचिन्तामणौ उक्तार्थप्रदर्शकाः—

'अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः।
तच्छब्दावयवार्थस्य विद्यायामेव सम्भवात्॥
उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते।
सामीप्यतारतम्यस्य विश्रान्तेः स्वात्मनीक्षणात्॥
त्रिविधस्य सदर्थस्य निशब्दोऽपि विशेषणम्।
उपनीय तमात्मानं ब्रह्माऽपास्तद्वयं यतः॥
निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेत्।
निहत्यानर्थमूलं स्वाविद्यां प्रत्यक्तया परम्॥

गमयत्यस्तसम्भेदमतो वोपनिषद्भवेत् ।
प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः ॥
यतोऽवसादयेद्विद्या तस्मादुपनिषद्भवेत् ।
यथोक्तविद्याहेतुत्वाद्ग्रन्थोऽपि तदभेदतः ।
भवेदुपनिषन्नामा लाङ्गलं जीवनं यथा ॥

इत्येते श्लोकाः सङ्गृहीताः । अत्र केचित् 'उपनिषदोऽर्थं उपासने'ति कल्पयन्ति । कचित्कचित् 'गूढार्थोपदेश' इति प्रकरणसमाप्तिसूचकसङ्केतप्रदर्शनाद् गूढार्थमुपदिशत्यास्तस्या अर्थो 'रहस्य'मिति तु युक्तं प्रतीमः। इत्थमेव कौटिलीये अर्थशास्त्रे वात्स्यायनीये कामशास्त्रे च 'इत्युपनिषत्' इति प्रकरणोल्लेखवीक्षणादपि प्रतीयते । कामशास्त्रे हि रहस्यार्थसूचकमेकमधिकरणमपि 'औपनिषदिकम्' इति नाम्ना सङ्केतितं वर्तते । औचित्यं नाम रसस्य परमं रहस्यमिति विवक्षया आनन्दवर्धनाचार्यैरपि—

'औचित्योपनिबन्धस्तु रसस्योपानिषत्परा' ।

इत्यत्र रहस्यार्थे एवोपनिषत्पदं प्रायुज्यत ।

## उपनिषद्विभागप्रदर्शनम् ।

साचेयमुपनिषद्ब्रह्मविद्या रहस्यरूपा गुरोः प्रसादेन लभ्या जीवात्मनोरैक्यं प्रतिपादयन्ती संसारहेतुकाविद्यादिदोषजातं निवर्तयन्ती सर्वात्मभूतमक्षरं ब्रह्माऽधिगमयतीति परा विद्या, विधिप्रतिषेधमात्रं बोधयन्ती षड्भिरङ्गैरुपेता ऋग्यजुःसामाथर्वरूपा वेदचतुष्टयी तावदपरा विद्येति मुण्डके प्रतिपादितं स्पष्टीकृतं च तद्भाष्ये विस्तरेण श्रीम-

च्छङ्कराचार्यैः । अपरस्यां विद्यायाम्-ऋग्वेदमृत्विजो, यजुर्वेदमध्वर्युः, सामवेदमुद्गाता, ब्रह्मा च अथर्ववेदमधीतवन्तः । चतुर्णामपि वेदानां प्रत्येकमनेकाः शाखा विद्यन्ते स्म । तासु ऋग्वेदस्यैकविंशतिर्यजुर्वेदस्य नवोत्तरं शतं सामवेदस्य सहस्रमथर्ववेदस्य च पञ्चाशदिति मिलित्वा अशीत्यधिकैकादशशतं शाखाः सम्पद्यन्ते । प्रत्येकं शाखानां तानि तानि ब्राह्मणानि तास्ताश्चोपनिषद आसन् । कालमहिम्ना अंशांशाऽदर्शनक्रमेण साम्प्रतमधिकांशेन बहवः शाखा विलुप्ता दृश्यन्ते । तत्र ऋग्वेदे—ऐतरेयकौषीतकिनादबिन्द्वादयः, शुक्लयजुर्वेदे—ईशावास्यबृहदारण्यकजाबालप्रमुखाः, कृष्णयजुर्वेदे-कठवल्लीतैत्तिरीयब्रह्माद्याः, सामवेदे-केनच्छान्दोग्यारुणिप्रभृतयः, अथर्ववेदे च प्रश्नमुण्डमाण्डूक्यप्रधानाः सन्त्युपनिषदः । सर्वमेतन्निरूपितं दृश्यते मुक्तिकोपनिषदि चरणव्यूहे च ।

उपनिषदां हि शुद्धवेदान्त, योग, संन्यास, शैव, शाक्त, वैष्णवनामधेयाः प्रायेण दृश्यन्ते षड्विभागाः । सौरगाणपतादिसम्प्रदायानुरोधादन्येऽपि कतिपये भेदाः सम्भवितुमर्हन्ति । तत्र शुद्धवेदान्तविभागे—मुण्डकप्रश्नमाण्डूक्यप्राणाग्निहोत्रपिण्डात्मसर्वोपनिषत्सारगारुडाद्याः, योगविभागे—ब्रह्मविद्याक्षुरिकाछुरिकाचूलिकानादबिन्दुब्रह्मबिन्द्वमृतबिन्दुध्यानबिन्दुतेजोबिन्दुशिखायोगतत्त्वहंसादयः, संन्यासविभागे—ब्रह्मसंन्यासारुणेयकण्ठश्रुतिपरमहंसजाबालाश्रमप्रभृतयः, शैवविभागे—अथर्वशिरोऽथर्वशिखनीलरुद्रकालाग्निरुद्रकैवल्याद्याः, कौलबह्वृचत्रिपुरादयः शाक्तविभागे, वैष्णवविभागे च महानारायणात्मबोधनृसिंहतापिनीगोपालतापिनीरामतापिनीप्रमुखा अन्तर्भवन्त्युपनिषदः ।

ऐतिहासिकास्तावत् 'प्राचीनतमगद्यात्मिकाः प्राचीनतरपद्यात्मिकाः प्राचीनगद्यात्मिकाश्चेत्युपनिषदस्त्रिविधा भवन्ति । गद्यमयीषु यत्र च्छान्दसाः प्रयोगा बाहुल्येन दृश्यन्ते स प्रथमो भेदः, यथा–बृहदारण्यकच्छान्दोग्यतैत्तिरीयैतरेयकौषीतकिप्रभृतयः । यत्र च पद्यमयीषु च्छान्दसप्रयोगाणामुपलम्भः स द्वितीयः, यथा–ईशकठश्वेताश्वतरमुण्डकमहानारायणाद्याः । व्याकरणसंस्कृताः शुद्धाः प्रयोगा यत्र गद्यरूपासु स च तृतीयः, यथा–प्रश्नमैत्रायणीयमाण्डूक्यादयः' इत्याहुरिदानीन्तनाः। अत्र च केनोपनिषत्प्रभृतयो गद्यपद्यमय्यश्छान्दसप्रयोगशालिन्यः खलु पूर्वभेदद्वयान्तरालस्थानेऽन्तर्भवितुमर्हन्ति ।

## उपनिषदामनुबन्धचतुष्टयम् ।

उपनिषत्स्वरूपप्रभेदादिकमित्थं निरूपितम्, अनुबन्धचतुष्टयमेतद्विद्यासम्बन्धि साम्प्रतं विचारणीयम्–द्विजातयस्तावदेतद्विद्यायामधिकारिणः । तत्र उपदेशकरणे ब्राह्मणानामेव, द्विजातिमात्रस्य चोपदेशग्रहणेऽधिकार इति विवेको विधीयते । यद्यपि राजर्षिजनकादितोऽप्युपनिषदुपदेशं लभमानास्तत्र तत्र श्रूयन्ते ब्राह्मणाः, तथापि तेषामप्युपदेशावाप्तिमूलान्वेषणे तद्विद्योपदेष्टारो ब्राह्मणा एव दृश्यन्ते । आश्रमिणां मध्ये संन्यासिन एव पूर्वस्मिन्कालेऽस्यां विद्यायामधिक्रियन्ते स्म । ततः किञ्चिदर्वाचीने समये नैष्ठिको ब्रह्मचारी, यथोक्ताचरणपरायणो मुमुक्षुर्गृहस्थो वनस्थोऽपि संन्यासिवदत्राधिकारं प्राप्तः श्रूयते । उपयोगः परं तद्विद्यायाः संन्यासाश्रम एव यथावदुपजायते । ज्ञानकाण्डमेवात्र प्राधान्येनोपलभ्यते निरूपितम् । बहुत्र कर्मोपासनयोरुपलभ्यमानयो-

रपि तयोर्ज्ञानसाधनत्वेनोपात्ततया न ज्ञानप्राधान्यहानिरिति ज्ञानमेवास्याः प्रतिपाद्यो विषयः । कर्म तावदन्तःकरणशुद्धिमुपासना तु चित्तस्थैर्यं विधाय ज्ञानमेवोत्पादयतीति स्फुटमेव प्राधान्यमत्र ज्ञानकाण्डस्य । अविद्यानिवर्तनजीवात्मैक्यज्ञानसम्पादनपूर्विका परमपदप्राप्तिरेतत्प्रयोजनमुच्यते । ब्रह्म प्रतिपाद्यं प्रतिपादकश्च ग्रन्थ इति तत्र प्रतिपाद्यप्रतिपादकभावरूपः सम्बन्धोऽनुसन्धेयः ।

एषा चोपनिषद्विद्या 'ब्रह्मा देवानां प्रथमः संबभूवे'त्यादिमुण्डकोपनिषद्वचनेन पूर्वं ब्रह्मणः सकाशादुपगतेति 'ब्रह्म वेदयति बोधयती'ति वा ब्रह्मविद्या निगद्यते । तथाच मोक्षावाप्तये श्रीरामाख्यस्य परब्रह्मण उपासनां प्रतिपादयन्ती प्रकृतेयं रामतापिनी नाम वैष्णवोपनिषदथर्वशाखीया 'छान्दसप्रयोगयुक्ते'ति प्राचीनतामात्मनः सूचयति । अर्वाचीनाः किलोपनिषदो व्याकृतिशुद्धा एव प्रायः समुपलभ्यन्ते ।

## श्रीरामचन्द्रावतारविचारः ।

उपनिषद्विषयकं विचारं परिसमाप्येदानीं श्रीरामचन्द्रावतारस्य तदुपासनायाश्च विषये किञ्चिन्मीमांसनीयमिति तत्रावतीर्यते—आधुनिकास्तावन्नूतनविचारपरिष्कृतबुद्धयो रामस्येश्वरत्वे संशयानास्तत्र तत्र यथेच्छं भूयो विवदन्ते । वयं तु पूर्वेषां वचनेषु विश्वसन्तस्तादृशं शङ्काकलङ्कं प्रकल्प्य स्वप्नेऽपि तदवकाशदानस्य साहसं न मानसे कुर्म इति कृतं काकदन्तपरीक्षया । केवलं नैकदुस्तर्कपरिपूर्णमस्तिष्कानां कोलाहलैः परिवर्तितविचारस्य श्रद्धाशालिनो जनस्य मन्दमतेः संशयमपनेतुं श्रीरामस्येश्वरत्वसूचकानि यथोपलब्धानि रामायणादिप्रमाणानि प्रदर्शयामः—तत्र ताव-

दध्यात्मरामायणे, सीताकृते विलापं कृतवतो रामस्य परमात्मरूपत्वे सन्दिहानायै पार्वत्यै साक्षाच्छङ्करेण परमात्मनः श्रीरामचन्द्रस्य स्वरूपं निरूप्य तत्त्वं निवेदितम् । यज्ञीयचरुभागमुपभुक्तवत्यां कौसल्यायामुत्पन्नो ब्रह्मणो नियोगेन रावणं हन्तुमवतीर्णो मनुष्यरूपेण चतुर्भुजो विष्णुर्मातुः प्रार्थनया बालरूपं धृत्वा रामनामा तास्ता लीलाश्चकार । किञ्च लक्ष्मणेन विरूपीकृतया शूर्पणखया सीतां भार्यारूपतां प्रापयितुं सूचितस्य रावणस्यापि चिन्तयतः—

एकेन रामेण कथं मनुष्य-
मात्रेण नष्टः सबलः खरो मे ।
भ्राता कथं मे बलवीर्यदर्प-
युतो विनष्टो बत राघवेण ॥

यद्वा न रामो मनुजः परेशो
मां हन्तुकामः सबलं बलौघैः ।
सम्प्रार्थितोऽयं द्रुहिणेन पूर्वं
मनुष्यरूपोऽद्य रघोः कुलेऽभूत् ॥

वध्यो यदि स्यां परमात्मनाऽहं
वैकुण्ठराज्यं परिपालयेऽहम् ।
नो चेदिदं राक्षसराज्यमेव
भोक्ष्ये चिरं राममतो व्रजामि ॥

इत्थं विचिन्त्याखिलराक्षसेन्द्रो
रामं विदित्वा परमेश्वरं हरिम् ।

विरोधबुद्ध्यैव हरिं प्रयामि
द्रुतं न भक्त्या भगवान्प्रसीदेत् ॥

इति वचनोद्गारा दृश्यन्ते । एतादृशानि भूयांसि प्रमाणानि प्रतिपदं तत्र तत्र प्रसङ्गेऽध्यात्मरामायणादुपलब्धुं शक्यन्ते । अत्र किलाऽद्वैतमते प्रतिपादितेऽपि शाक्तभावप्राधान्येन हरिरूपेण रामेण सह लक्ष्मीरूपायाः सीताया अप्युपासनोपदर्शिता । केचिदस्य ग्रन्थस्य नूतनकल्पितत्वमाशङ्क्य अप्रामाणिकत्वं शङ्कन्ते । तान्प्रति किमपि वयं वक्तुं नोत्सहामहे ।

अस्तुनाम, वाल्मीकीयरामायणं तावदालोचयामः—आर्षेऽस्मिन् रामायणे 'को न्वस्मिन्पुरुषो लोके' इत्यादिनारदप्रश्नानुसारं श्रीरामस्य अत्युत्कृष्टराजनीतिसम्पन्नस्य राजकुमाररूपेणैव वर्णनमुपलभ्यते, तथापि उपक्रमोपसंहाराभ्यां निर्णीयते परमेश्वरत्वमपि विष्णोर्मनुष्यावतारं प्राप्तस्य रामचन्द्रस्य । तथाहि बालकाण्डे–

'पुत्रत्वं तु गते विष्णौ राज्ञस्तस्य महात्मनः' ।

इति सप्तदशसर्गारम्भे तदेव साक्षात्प्रतिपादितम् । युद्धकाण्डे च पञ्चत्रिंशे सर्गे–'रामेण सह सन्धिः कार्य' इत्यभिप्रायेण माल्यवता रावणं प्रति सूचिताः—

'असृजद्भगवान्पक्षौ द्वावेव हि पितामहः ।
सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ॥
धर्मो हि श्रूयते पक्ष अमराणां महात्मनाम् ।
अधर्मो रक्षसां पक्षो ह्यसुराणां च राक्षस' ॥

इत्यादयः श्लोका रामस्य धर्मपक्षीयत्वं तेन च सुरत्वं व्यञ्जनया बोधयन्ति । तस्मिन्नेव काण्डे रावणे हते लब्धां जनापवादभिया रामेण

२

जिहासितां भर्त्सितां सीतां स्वीयचारित्र्यशुद्धिप्रदर्शनाय वैश्वानरं प्रविष्टामवेक्ष्य रामानुग्रहाय लङ्कामागतैर्देवैर्व्याहृतानि—

'कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानविदां विभुः ।
उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने
कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे' ॥

इत्यादीनि वचनानि, तथा तत्रैव प्रसङ्गे इन्द्रलोकादुत्तीर्य दशरथेन रामं प्रति—

'इदानीं च विजानामि यथा सौम्य सुरेश्वरैः ।
वधार्थं रावणस्येह पिहितं पुरुषोत्तमम्' ॥

इत्युक्त्वा,

'एते सेन्द्रास्त्रयो लोकाः सिद्धाश्च परमर्षयः ।
अभिवाद्य महात्मानमर्चन्ति पुरुषोत्तमम् ॥
एतत्तदुक्तमव्यक्तमक्षरं ब्रह्मसंमितम् ।
देवानां हृदयं सौम्य गुह्यं रामः परन्तप' ॥

इत्यादिना कृतः सीतायै रामसेवोपदेशश्चेति सर्वमिदं समर्थयति पूर्वोक्तमेवार्थम् । उत्तरकाण्डेऽपि एकपञ्चाशे सर्गे—

'यस्मादवध्यां मे पत्नीमवधीः क्रोधमूर्छितः ।
तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन' ॥

इति दुर्वाससः, अष्टनवतितमे सर्गे—

'न खलु त्वां महाबाहो स्मारयेयमनुत्तमम् ।
इमं मुहूर्तं दुर्धर्ष स्मर त्वं जन्म वैष्णवम्' ॥

इति ब्रह्मणः, चतुरधिकशततमे च सर्गे—

'रक्षां विधास्यन्भूतानां विष्णुत्वमुपजग्मिवान्'।

इत्यादीनि च कालस्य वचांसि रामचन्द्राख्यया साक्षान्मनुष्यलोके विष्णोरवतारं प्रकटयन्ति। अन्ते च सरयूजले पद्भ्यां चरन् श्रीरामचन्द्रः

'आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि राघव'।

इत्यादिगगनगतब्रह्मवचनश्रवणसमनन्तरमेव

'विवेश वैष्णवं तेजः सशरीरः सहानुजः'।

इति वैष्णवं स्वात्मनः स्वरूपं प्राविशदित्यतः स्पष्टं शक्यते वक्तुम्—यद्विष्णुरेव देवैर्नियोजितो भूतलमवतीर्य दाशरथिर्भूत्वा कृत्वा च दुष्कराणि तानि तानि कर्माणि एकादशसहस्रवत्सरावधि तत्रैव कालं नीत्वाऽन्ते स्वस्वरूपमवतस्थ इति।

अत्र च रामायणे वाल्मीकीये भूयिष्ठो भागो विशेषतश्च बालकाण्डोत्तरकाण्डयोस्तत्रापि परमेश्वरत्वसूचको वचनविशेषः प्रक्षिप्त इति केऽपि कल्पयन्ति। तत्रैवं पर्यालोच्यते, यत्खलु प्राचीनतमेषु हस्तलिखितेषु पुस्तकेषु नोपलभ्यते तन्नूनं प्रक्षिप्तं मन्तव्यम्। ईश्वरत्वसूचकानि सर्वाणि वचनानि प्रक्षिप्तानीति नैव विश्वस्यते चेतसा। 'सङ्गतमपि स्वीयमतविरुद्धं दूषितमेवे'ति युक्तेयं नीतिः। किञ्च—चतुर्विंशतिसहस्रात्मकेऽस्मिन् रामायणे प्रतिसहस्रमाद्यक्षराणि मिलित्वा चतुर्विंशत्यक्षरा गायत्री निष्पद्यत इत्यस्ति रहस्यम्। एवंसति बालकाण्डोत्तरकाण्डयोर्विशेषतः प्रक्षिप्तत्वे कल्पिते तदन्तर्गतानां गायत्र्यक्षराणामपि केषाञ्चन विच्छेदः सम्भवतीति पूर्वोक्तं रहस्यमप्युच्छिद्येत।

आस्तां तावत्, 'श्रीमद्भागवतमप्यत्र विषये किं वक्ती'ति विचारणीयम्। अत्र हि प्रथमस्कन्धे तृतीयेऽध्यायेऽवतारप्रदर्शनप्रसङ्गे—

'नरदेवत्वमापन्नः सुरकार्यचिकीर्षया।
समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः परम्' ॥

इत्ययं श्लोको रामरूपेण विष्णोरष्टादशमवतारं व्याचष्टे। द्वितीयस्कन्धस्य सप्तमेऽध्यायेऽवतारचरितवर्णनरूपे—

'अस्मत्प्रसादसुमुखः कलया कलेश
इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशात्।
तिष्ठन्वनं सदयितानुज आविवेश
यस्मिन् विरुध्य दशकन्धर आर्तिमार्च्छत्' ॥

इति ब्रह्मणो वचनमप्यत्र प्रमाणतां गच्छति। नवमस्कन्धे दशमेऽध्यायेऽपि—

'खट्वाङ्गाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः।
अजस्ततो महाराजस्तस्माद्दशरथोऽभवत्॥
तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिः।
अंशांशेन चतुर्धाऽगात्पुत्रत्वं प्रार्थितः सुरैः' ॥

इत्युपक्रम्य वर्णिते रामचरिते,

'न त्वां वयं जडधियो नु विदाम भूमन्
कूटस्थमादिपुरुषं जगतामधीशम्।
यत्सत्त्वतः सुरगणा रजसः प्रजेशा
मन्योश्च भूतपतयः स भवान्गुणेशः' ॥

इत्यादिसमुद्रोक्तिस्तथा तत्र तत्र 'भगवान्' इति पदप्रयोगश्च रामं

हरेरवतारं व्यक्तमेव सूचयति। तथैव—

'भगवानात्मानात्मानं राम उत्तमकल्पकैः।
सर्वदेवमयं देवमीज आचार्यवान्मखैः'॥

इत्येकादशाध्यायप्रथमश्लोकोऽपि तत्रानुकूल एव। पञ्चमे वेदे महाभारतेऽपि वनपर्वणि पञ्चसप्तत्युत्तरद्विशतेऽध्याये—रावणत्रस्तान्वैश्वानरं पुरस्कृत्य समुपतस्थुषो ब्रह्मर्षिप्रमुखान्प्रति—

'न स देवासुरैः शक्यो युद्धे जेतुं विभावसो।
विहितं तत्र यत्कार्यमभितस्तस्य निग्रहः॥
तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः।
विष्णुः प्रहरतां श्रेष्ठः स तत्कार्यं करिष्यति'॥

इति ब्रह्मणो वचनं रामात्मना हरेरवतारमेव द्योतयति। अन्यान्यपि नृसिंहपुराणादीनि प्रायः सर्वाणि पुराणानि रामं परमात्मरूपमेव प्रतिपादयन्ति। अगस्त्यसंहितयाऽपि—

'वेदवेद्ये परे पुंसि जाते दशरथात्मजे'।

इत्यादिना तदेव प्रतिपाद्यते। अतएव परमेश्वरस्य रामस्य रावणिजनितनागपाशबन्धनतः संशयं प्राप्ताय गरुडाय साक्षात्कृतरामेण काकभुशुण्डिनोपदिष्टं रामरहस्यं निबध्नतो महात्मनस्तुलसीदासस्यापि वचः सङ्गच्छते। कचित्तु ब्रह्मविष्णुशङ्करा अपि पूर्णब्रह्मणो रामस्यैवावतारा इति स्वतन्त्रावतारत्वमपि तस्योक्तम्।

'रा शक्तिरिति विख्याता मः शिवः परिकीर्तितः।
शिवशक्त्यात्मकं ब्रह्म रामरामेति गीयते॥

राशब्दो विश्ववचनो मश्चापीश्वरवाचकः ।
विश्वेषामीश्वरो यो हि तेन रामः प्रकीर्तितः ॥
रमते रमया सार्धं तेन रामं विदुर्बुधाः ।
रमाणां रमणस्थानं रामं रामविदो विदुः ॥
राचेति लक्ष्मीवचनो मश्चापीश्वरवाचकः ।
लक्ष्मीपतिं गतिं रामं प्रवदन्ति मनीषिणः' ॥

इति सङ्ग्रहोऽपि अवयवार्थप्रदर्शनेन रामस्य परमेश्वरत्वं व्यनक्ति ।

अत्रेदं तत्त्वम्—देवदेवेन शिवेन समनुष्ठीयमाना श्रीरामस्योपासनापि तस्येश्वरत्वं प्रत्याययति । किञ्च—यस्य चरणस्पर्शमात्रेण दिव्यतेजोरूपत्वमहल्यया शिलाभूतया दुर्लभं लब्धम् , येन च शैवं धनुरन्यैरनुत्थापितपूर्वं लीलयैवाङ्गुलिस्पर्शमात्रतो द्विधाकृतम् , यस्य भ्रूविजृम्भणमात्रात्समुद्रो भीतः स्तब्धतां गतवान्, यस्य च नामाक्षैरङ्किता दृषदोऽपि सागरे तरन्त्यः सेतुरूपा अभूवन्, अमानुषकर्मणस्तस्य रामचन्द्रस्य दिव्यशक्तिशालिनः परमेश्वरत्वे को नाम सहृदयः संशयीत । एतत्तु संशयच्छेदि परमं पर्याप्तं प्रमाणममुष्मिन्विषये, यत्किल प्राणोत्क्रमणसमये काश्यां विश्वेश्वरेण समुपदिश्यमानो रामस्य षडक्षरस्तारको मन्त्रः सकलसंसारबन्धान्मोचयित्वा प्राणिमात्रमपवर्गमार्गं प्रापयति । अतएव 'काश्यां मरणान्मुक्ति'रिति प्रथिता सतां सूक्तिः सङ्गच्छते । 'रमन्ते योगिनोऽस्मि'न्निति योगार्थेनापि परब्रह्मपरमात्मस्वरूपो रामः कल्प्यते । दुःखश्रवणादिप्रसङ्गेषु च 'शिवशिव'शब्दवत् 'राम राम' इत्येवोद्गाराः प्राणिनां मुखान्निःसरन्तः श्रूयन्ते, अन्तिमयात्रायामपि रामशब्द एव सर्वैरावर्त्यते, तस्माद्रामस्य किमपि महत्त्वं गम्यते । अपिच रामाख्यया

विष्णुरिव, सीताख्यया लक्ष्मीरेव साक्षादवतीर्णेत्यपि तत्र तत्रास्ति प्रतिपादितम् ।

'राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि' ।

इति विष्णुपुराणीयवचसाऽप्येतदेव सूच्यते । इत्थंसति रामस्य वैष्णवावतारत्वाभावे लक्ष्म्यवतारस्य अप्रयोजनकतया तत्सूचकानि वचनानि नोपपद्येरन् । अतो लक्ष्म्यवतारप्रतिपादकवचनान्यथानुपपत्त्यापि 'रघुकुले विष्णुरवतीर्णो रामरूपेणे'ति कल्पयितुं नाऽसाम्प्रतमिति मन्ये। एकवारमपि यस्य नामोच्चारणं सकलपातकक्षयं कृत्वाऽक्षयं पदं दातुं प्रभवति, तस्य रामस्य परमात्मरूपत्वे पुराणादिप्रमाणैर्युक्तिभिश्च सम्यक्प्रतिष्ठापिते किमन्यद्वक्तव्यं तत्रावशिष्यते ।

## श्रीरामोपासनाविचारः ।

अस्य च परमात्मनः श्रीरामचन्द्रस्य उपासना कुतः कालादाविर्भूतेति विषये किमपि नैव निश्चितं वक्तुं शक्यम् , किन्तु शिव एव सर्वस्मात्पूर्वमेतदुपासनायाः प्रवर्तक इति तावन्निर्विवादम् । वल्मीकजन्मनापि नारदाय श्रीरामोपासनाविधिरुपादिश्यत । एतस्याः प्रचारः पूर्वकालानुगतो दक्षिणदेशेऽद्यापि भूयिष्ठो लक्ष्यते । अत्र च पुरातनतत्त्वान्वेषिणो विद्वांसः—'ईशवीयशतकारम्भतः पूर्वं षट्शतवत्सरेभ्य आरभ्य चतुःशतवत्सरान् यावत् ( चतुर्विंशतिशतवर्षेभ्यः प्राक् षड्विंशतिशतवर्षानन्तरं) मध्यगते काले रामायणनिर्माणं सम्भाव्यते। ईशवीयात्समयाद्वर्षाणां शतद्वयीतः पूर्वं यदा मौर्यवंशानन्तरं सुङ्गवंशस्याधिपत्यं प्रावर्तत तदा वैदिको धर्मः पुनरपि जागर्तिमापद्यत, रामायण-

महाभारतयोः प्रचारश्च नूतनया रीत्या भूयोऽप्युदपद्यत । अमुष्मिन्समये रामकृष्णौ अवताररूपेण लोकैरमानिषाताम् । प्राचीनतमे काले रामोपासना पूर्णरूपेण प्रचलितासीदित्यत्र बलवत्तरं किमपि प्रमाणं नोपलभ्यते । किन्तु अर्वाचीनतः समयादवश्यमेतस्याः प्रचारोऽभवद्यथा च श्रीरामपूर्वतापिनीतोऽवगम्यते । अगस्त्यसुतीक्ष्णसंवादेऽपि रामोपासनावर्णनं विद्यते । किञ्च-वायुपुराणे रामस्यावतारो वर्णितः । रघुवंशे कालिदासोऽपि दशमे सर्गे-'सोहं दाशरथिर्भूत्वे'त्यादिना परमेश्वरत्वेन रामचन्द्रमुपासनीयं प्राह । १०१४ शतकीयेन अमितगतिनाऽपि तद्वर्णनं व्यधीयत । भवभूतिरपि राममुपास्यत्वेन परमात्मानं निरदिक्षत् । एतावता प्रबन्धेन प्रतीयते, यत् रामस्यावताररूपतयाऽवस्थानं यद्यपि साधु सर्वेषां विदितमासीत्तथापि वास्तविकमुपासनामतमेकादशशताब्दीतः प्रववृते' इति सिद्धान्तयन्ति । अत्र बहूनां नैकविधा विप्रतिपत्तयो विद्यन्ते ।

रामोपासना चेयं 'वैदिकी तान्त्रिकी वे'ति प्रश्नस्तु महतीं गभीराकृतिं धत्ते । अत्र च विचारं इत्थं सम्भवति-मन्त्ररामायणे नीलकण्ठोद्धृतैर्वैदिकैर्मन्त्रै रामचरितं प्रतिपादितम् । प्रकृतया रामतापिन्युपनिषच्छ्रुत्यापि रामोपासना सम्यक्प्रकारेण निरूपिता । अतश्चैषा वैदिकीति गदितुं शक्यम् । रामस्य पूर्णब्रह्मरूपत्वाद् ब्रह्मणश्च श्रुतिसिद्धत्वेन परम्परयापि तथा कल्पयितुं शक्यते । अथच नारदपञ्चरात्रे शारदातिलकादौ च तान्त्रिकग्रन्थे रामस्योपासना दृष्टिगोचरीभवतीति सा तान्त्रिकीत्यपि वक्तुं पार्यते । एवंच श्रीरामोपासना न केवलं वैदिकी नापि तान्त्रिकी, किन्तु वैदिकी तान्त्रिकी चेत्युभयीं विधामालम्बते ।

तत्त्वं तु—तन्त्रमपि वेदानुकूलमेव प्रमाणकोटौ निक्षिप्यते ।

वेदप्रतिकूलं तु तन्न प्रामाण्यमर्हति । तथाच प्रायः प्रामाणिकी तान्त्रिकी उपासना वैदिक्यामुपासनायामप्यन्तर्भवति । सूचयत्येतदेव परमं रहस्यं—

'वेद एव हि तन्त्रं स्यात्तन्त्रं वेदः प्रकीर्तितः ।
नानयोर्विद्यते भेदो लेशांशेनापि कुत्रचित्' ॥
'वेदो ह्यागमराशिः स्याच्छब्दराशिस्तथाऽऽगमः' ।

इत्यादिभिस्तन्त्रवेदयोरभेदं बोधयत्पूर्वोक्तार्थसमर्थकं त्रिपुरारहस्यमाहात्म्यखण्डमपि । किञ्च—'श्रुतिर्वैदिकी तान्त्रिकी' चेति श्रीमच्छङ्कराचार्यैरुपनिषद्भाष्ये मनुस्मृतिटीकायां कुल्लूकभट्टैरपि श्रुतेर्द्वैविध्यमुक्त्वा तस्या एव वैदिकतान्त्रिकरूपस्य विभागद्वयस्य प्रकल्पनादिदमेव तात्पर्यमुदघोषि भङ्ग्यन्तरेणेति ।

## प्रस्तुतग्रन्थालोचनम् ।

इत्थंप्रकारैः श्रीरामचन्द्रावतारोपासनाविषयकं विचारं प्रस्तुत्य 'गहनेऽस्मिन्विषये कथमिव मादृशां मन्दानां लप्स्यते प्रवेशं बुद्धि'रिति किमपि यथामति प्रपञ्चितम् । साम्प्रतं ज्ञानप्राधान्येन परब्रह्माभिन्नस्य श्रीरामचन्द्रस्य सगुणनिर्गुणोपासने प्रतिपादयतः प्रकृतग्रन्थस्य पर्यालोचनं तावत्समासतः प्रस्तूयते- एषा च रामोपनिषत् पूर्वतापिनी उत्तरतापिनी चेत्येवं विभागद्वयं प्राप्ता श्रीरामस्य परब्रह्मणाऽभेदं निरूपयन्ती रामतत्त्वं प्रकाशयति । अस्यां च निर्गुणौपाधिकीं सगुणोपासनां प्रतिपादयन्त्यां पूर्वतापिन्यां मन्दबुद्धयोऽलसशिरोमणयः प्राधान्येनाधिकारिणः, सगुणफलभूतां निर्गुणोपासनां निरूपयन्त्यामुत्तरतापिन्यां तु उत्तमाः कर्मतत्फलपराङ्मुखा

विरक्ताः परमहंसा एवेति ११६ पृष्ठे प्रतिपादितं व्याख्याकारेण। अत्र चोत्तरतापिन्यामितरोपनिषदन्तर्गता अपि काश्चन श्रुतयः समग्राहिषत। एतद्व्याख्यायाः किल पूर्वतापिन्यां 'रामकाशिके'ति उत्तरतापिन्यां च 'आनन्दनिधि'रिति नामधेयं साभिप्रायं प्रकल्पितं दृश्यते। तथाहीयं व्याख्या चिद्रूपं श्रीरामं प्रकाशयत्यतो रामकाशिकेति, जीवात्माभेदजनितस्यानन्दस्य निधानमित्यतश्च आनन्दनिधिरित्यनुगतार्थं सङ्केतमधिगच्छति।

तत्र तावत्पूर्वतापिन्याम्—रामात्मानिर्गुणसगुणब्रह्मनिरूपणपूर्वं षडक्षरमन्त्रराजस्य जपं विधेयतयोपदिश्य उपाधिवशात्परमात्मनो रामस्य जगत्सर्गादिकारणीभूतस्य विराट्हिरण्यगर्भाव्याकृतात्मकावस्थात्रितयशालित्वं प्रतिपाद्य तत्त्वंपदार्थशोधनेन राममन्त्रराजावयवभूतस्य बीजत्रयस्यार्थं च प्रकल्प्य पूजासाधनयन्त्रमन्त्रोद्धारप्रदर्शनेन पूजाविधिर्निरूपितः।

उत्तरतापिन्यां च—अविमुक्तं प्रस्तुत्य तत्र प्राप्यस्य तारकमन्त्रस्य मोक्षसाधनत्वं संसाध्य तारतारकैक्यप्रतिपादनमुखेन तारकस्य स्वरूपमर्थं च प्रदर्श्य वाच्यवाचकाभेदनिरूपणगर्भम् ॐकारोपासनया मुक्तिप्रकारं च प्रतिज्ञाय चतुष्पादात्मस्वरूपस्य श्रीरामस्य प्राप्त्यौपायिकः प्रसादप्रकारः प्रदर्शितः।

तत्र तत्र स्थलेषु टीकाकृदुक्तमिदानीं विषयविशेषमालोचयामः— अत्र च व्याख्याकृता नित्यस्य रामचन्द्रस्य परब्रह्मणः श्रुतिस्मृत्यादिप्रामाण्यतो वस्तुतो जन्मन्यनुपपद्यमानेऽपि प्रातिभासिकं जन्मोपपद्यत इति पक्षमेकमुद्भाव्य, स्वयंप्रकाशस्य तस्य अविद्यया तिरोहितप्रकाशरूपत्वे सत्यपि विद्यया तदपनोदनपूर्वं स्वरूपस्फूर्तिर्भवतीति 'प्रागप-

काशात्मकस्य पश्चात्प्रकाशात्मकत्व'मित्येवंरूप आविर्भाव एव जन्मेति पक्षान्तरं च प्रदर्श्य, विकारासहत्वप्रतिपादनेन जन्माभावत्वशङ्कामुत्थाप्य निर्विकारस्यापि भगवतो लोकानुग्रहकाम्ययाऽऽहार्यदेहसङ्गतिः श्रुति-स्मृतिपुराणप्रभृतिषु प्रसिद्धेत्यतः शरीरसम्बन्ध एवोत्पत्तिरिति प्रकल्पिते सिद्धान्ते आनुकूल्यमक्षपादोपजीविनां प्रादर्शि ।

'सर्वं खल्विदं ब्रह्मे'त्यत्र च सर्वमनूद्य ब्रह्मात्मत्वं, ब्रह्मानूद्य सर्वा-त्मत्वं वा विधीयते इति पक्षद्वयोत्थापनेन सर्वमनूद्य ब्रह्मात्मतायां सि-द्धान्तितायां सर्वस्य प्रपञ्चस्य सत्यत्वापत्तौ दोषमाशङ्क्य स्वरूपेण मिथ्या-भूतत्वेऽपि ब्रह्मरूपेण तस्य सत्यत्वमुपपादितम् । ब्रह्मणश्च त्रिविधपरि-च्छेदशून्यत्वं प्रतिपाद्य ब्रह्मातिरिक्तस्य सर्वस्याप्यविद्यमानत्वे दूषणप्रद-र्शनेन तस्य पारमार्थिकत्वं समर्थ्य ब्रह्मण आनन्दात्मकताप्रतिष्ठापनेन आनन्दरूपे ब्रह्मणि रमणमानन्दप्राप्तिरूपत्वेन पुरुषार्थ एवेति सिद्धा-न्तितम् । सत्यादिपदानामेकार्थाभिधायकत्वे पर्यायत्वापत्तिरनेकार्थाभि-धायकत्वे च विकल्पासहत्वमिति पूर्वपक्षप्रकल्पनेन एकार्थतापक्षमङ्गी-कृत्य एकार्थत्वमात्रेण अभिधेयार्थैक्येन च पर्यायतापत्तिर्न सम्भवतीति तेषामखण्डार्थत्वे निरूपिते, निरवयवत्वं नित्यत्वं निर्विभागार्थत्वं चेति त्रिविधमप्यखण्डस्य लक्षणं न शक्यं निरूपयितुमित्यतः सत्यादिशब्दा-नामखण्डार्थत्वं नोपपद्यत इति विरोधिमतमुपन्यस्य पर्यायरहितानेक-शब्दप्रकाशितत्वमविशिष्टत्वं चेति निरूपितस्याखण्डलक्षणस्य ब्रह्मणि समन्वयप्रदर्शनपूर्वं ब्रह्मणः सधर्मकत्वेऽद्वैतभङ्गः प्रसज्येतेति निर्धर्म-कत्वम्, अद्वैतश्रुतिप्रामाण्यस्य च अभ्युपेयत्वं, सर्वथा ब्रह्मणि धर्माणा-मविद्यमानत्वं च प्रतिष्ठापितम् । सगुणोपासकानां निर्गुणोपासकानां

च सगुणनिर्गुणात्मकस्योभयविधस्यापि फलस्यावाप्तिर्न सम्भवतीत्युपासकानां फलप्रदानाय ब्रह्मणो रूपकल्पना नोपपन्नेति पूर्वपक्षमुत्थाप्य सगुणोपासकानां सगुणप्राप्त्यर्थमेव रूपकल्पनेत्युत्तरपक्षप्रदर्शनेन सगुणप्राप्तेः सगुणोपासनासाध्यत्वमुपपाद्य अनित्यया रूपकल्पनया नित्यस्य वाञ्छितफलस्यावाप्तौ समर्थितायां रूपकल्पनायाः सत्यत्वं संसाध्य तया परब्रह्मावाप्तेः सौलभ्यं निरूपितम् । 'विष्णुरुपांशु यष्टव्य' इत्यत्र विधित्वे वाक्यभेदापत्त्या वाक्यैक्यस्य च आवश्यकतया विधिविरहत्वं तव्यप्रत्ययस्य च विधिस्वरूपत्वं प्रतिपाद्य 'मन्त्रो जप्तव्य' इत्यत्र विधित्वे बाधाभावेन विधिविरहत्वासम्भवाद्विधिविषयभूतायाः 'किं केन कथ'मित्यंशत्रयवत्या भावनाया अवश्याश्रयणीयत्वे निरूपिते, भवनप्रयोजकव्यापाररूपाया भावनाया जपविधावसम्भवान्मोक्षस्य च भाव्यत्वानुपपत्त्या परिस्पन्दात्मिकाया अपि भावनायास्तत्र दुर्लभतया विधित्वं नोपपद्यत इति परपक्षमुपन्यस्य नित्यस्य मोक्षस्य पारमार्थिके भाव्यत्वेऽसम्भवत्यपि अभिव्यक्तिरूपं भाव्यत्वं सम्भवतीति भाव्यस्य सद्भावाद्भावनायां सुलभायां तद्विषयस्य विधेरावश्यकता सिद्धान्तिता । 'कोऽयं विधि'रित्यत्र 'विधिरेवे'त्युत्तरेऽनुपपत्तिमाशङ्क्य प्रश्नवाक्यगतस्य विधिशब्दस्य सामान्यविधित्वमुत्तरवाक्यगतस्य चाऽपूर्वविधित्वमित्यर्थाभिधानेन तस्योत्तरस्योपपत्तिः प्रदर्शिता । तत्तल्लक्षणविरहात् अपूर्वविधित्वस्य नियमविधित्वस्य परिसंख्याविधित्वस्य चाऽसम्भवाद्विध्यन्तरस्याप्यभावेन 'जप्तव्य' इत्यस्य विधित्वं न सम्भवतीति शङ्कामुत्थाप्य प्रमाणान्तरेणाप्राप्तस्यार्थस्य प्रापकत्वं तत्र स्फुटीकृत्य अत्यन्ताप्राप्तप्रापणात्मकस्य अपूर्वविधेः सद्भावः संसाधितः ।

'स्वयमेव, स्वत एव वा भवती'त्युभयविधस्याप्यर्थस्यानुपपद्यमानतया स्वभूत्वं रामचन्द्रस्य न साम्प्रतमिति शङ्कायां, 'स्वसत्तायां कारणानपेक्षित्वं कारणान्तरादनुत्पद्यमानत्वं च'ति स्वभूशब्दस्यार्थद्वयं समाधाय वस्तुत्वहेतुना सकारणत्वानुमानस्यासिद्धिं च परिदर्श्य शरीरस्य सकारणत्वसम्भवेऽपि तदधिष्ठातृ रामस्य तथात्वासम्भवेन स्वभूत्वं समार्थयद्व्याख्याकारः । "स्वयंप्रकाशत्वे च -स्वसत्तायां प्रकाशाव्यतिरेकित्वं, समानजातीयप्रकाशाप्रकाश्यत्वं, स्वस्य स्वयमेव प्रकाशः, स्वयं चासौ प्रकाशश्चेति लक्षणं किमपि न सम्भवति, 'प्रत्यक्षमनुमानमुपमानमर्थापत्तिरागम ऐतिह्यं सम्भवोऽभावश्चे'ति प्रमाणान्यष्टावपि नोपपद्यन्ते, ऋषिभिरिष्यमाणं नापि नवमं किमपि प्रमाणमस्ति, जगदान्ध्यप्रसङ्गभिया आत्मनोऽप्रकाशरूपत्वमपि न शक्यते वक्तुम्, 'अतोऽन्यदार्त'मित्यादिश्रुतिप्रामाण्येन जगत आरोपसिद्धतयाऽऽरोपस्य चाधिष्ठानसापेक्षत्वेनाऽऽत्मन एवाधिष्ठानताया औचित्येन प्रकाशरूपत्वं विना तस्य तत्त्वानुपपत्तेः प्रकाशमानत्वमात्मनो वक्तव्यमेव, स्वप्रकाशत्वं तदपि लक्षणप्रमाणाभावान्न सम्भवती"ति बौद्धानां पूर्वपक्षमुदभावयत् । "स्वव्यवहारेऽन्यानपेक्षत्वमेव स्वप्रकाशत्वस्योपपद्यते लक्षणम्, अनुव्यवसायाधीनव्यवहारे लक्षणमिदं न समन्वेतीति चेदनुव्यवसाय एव तावन्नाभ्युपेयः, लक्षणे अन्यशब्दश्च ज्ञानमेवोपलक्षयति, निर्दुष्टेन अनुभूतित्वहेतुनाऽनुभूतेः स्वप्रकाशत्वानुमानं च सम्भवति, सर्वापेक्षया बलवत्या अर्थापत्तेः 'अत्रायं पुरुष' इत्यादेरागमस्य च प्रामाण्यमुपलभ्यते, स्वप्रकाशस्यात्मनो जगदध्यासाधिष्ठानत्वमपि न विरुद्धमिष्यतः 'स्वेनैव भासत' इति श्रुत्या स्वप्रकाशत्वं लक्षणप्रमाणसिद्ध्या निरू-

न्तरायं सिध्यती''ति सिद्धान्तपक्षं प्रादर्शयत्। जगतः पर्यवस्थापितं प्रकाशमानत्वं न किल स्वतः, किन्तु परतस्तत्रापि रामस्वरूपादात्मन एव सम्भवतीति रामस्य तत्प्रकाशकतया स्वप्रकाशत्वं दण्डापूपिकया समसाधयत्।

संयोगस्य समवायस्य तादात्म्यस्य एकार्थसमवायस्य एकार्थतादात्म्यस्य च सम्बन्धस्यानुपपद्यमानतां प्रदर्श्य सम्बन्धानुसन्धानं विना अचितो जगतश्चितो रामस्य च परस्परं भास्यभासकभावो भवितुं न शक्नोतीति समुत्थापिते पूर्वपक्षे वस्तुतः संयोगादिसम्बन्धस्यासम्भवेऽप्युपपादितेनाऽऽध्यासिकेन सम्बन्धेन स्वप्रकाशत्वं युक्त्या पर्यवास्थापयत्। सर्वेषां प्रत्ययानां यथार्थत्वानुमानं प्रदर्श्य वृद्धैरादृतायाः सङ्कुचितवृत्तिताया अवलम्बनेन सर्वशब्दस्य सम्यग्रजतप्रतीतिव्यतिरिक्तपरत्वे प्रकल्पिते पक्षान्तरेण विगीतानां प्रत्ययानां यथार्थत्वानुमानप्रदर्शनपूर्वं कारणस्यानुपलम्भात्कारणं विना कार्यस्य विभ्रमस्याऽसद्भावं प्रतिपाद्य भावरूपाया विद्याऽभावरूपायाश्च अविद्याया असम्भवेनाऽविद्याशबलत्वस्य वक्तुमशक्यत्वादसङ्गत्वाच्च ब्रह्मणो, रामस्य जगदाधारत्वेऽपि रामतद्बीजयोरभेदप्रदर्शनेन प्रापितं जगदुपादानत्वं न सिध्यतीति मतमुदघाटयत्। प्रत्ययानां यथार्थत्वानुमानद्वये प्रतिपक्षिप्रतिपादितार्थेषु च दूषणं प्रदर्श्य चक्षुरादेः कारणस्योपलभ्यमानत्वेन कार्यभूतस्य विभ्रमस्य सुलभतया, तदनुमितयाऽविद्ययाऽऽलिङ्गितस्य ब्रह्मणो जगदुपादानत्वमुपाबृंहयत्। ज्ञानस्य सविषयत्वेन ज्ञानविशेषस्य विभ्रमस्य विषये प्रदर्शनीये, अधिष्ठानस्य रजतादेश्च सद्रूपस्याऽसद्रूपस्य सदसद्रूपस्य वा तद्विषयत्वासम्भवं दृढीकृत्य निर्विषयेण असम्भवदात्मलाभेन विभ्रमेणाऽविद्यानुमानाभावशङ्कामुपक्षिप्य अनिर्वचनीयत्वं नाम विभ्रम-

स्याऽदूष्यं विषयं प्राकाशयत् । अनिर्वचनीयत्वस्य 'सदसद्विलक्षणत्व'-मिति लक्षणं सन्दूष्य तत्र च ख्यात्याद्यनुपपत्तेः प्रामाण्याभावे प्रदर्शिते, बाधविषयत्वस्य कारणत्रितयजन्यत्वस्य संस्कारसम्प्रयोगदोषजन्यत्वस्य प्रतिभासमात्रशरीरत्वस्य च तल्लक्षणस्यानुपपत्तेरनिर्वचनीयत्वमशक्याभिधानमित्याशङ्क्य तत्तद्रूपनिरूपणासहिष्णुत्वरूपानिर्वचनीयत्वलक्षणोपन्यासेन रजतादेः सदादिरूपेणाऽनिरूप्यत्वं निरूप्य लक्षणलक्षितेऽनिर्वचनीयत्वे ख्यात्याद्यनुपपत्तेः प्रामाण्यं च स्फुटीकृत्य अनिर्वचनीयत्वविषयं लब्ध्वा लब्धात्मलाभेन विभ्रमेण कार्येणाऽविद्यायामनुमितायां तच्छबलस्य श्रीरामाख्यस्य ब्रह्मणो जगदुपादानत्वं सम्यगसिद्धान्तयत् । रेफस्य वर्णान्तरेण सामानाधिकरण्यमुपपाद्य सांख्यैरभिमते प्रकृतेर्जगत्कारणत्वे निराकृते अचेतनायाः प्रकृतेर्जगदुपादानत्वे प्रवृत्त्यभावमुदाहृत्य जगदपेक्षया परमाणूनां न्यूनपरिमाणत्वेन जगदुपादानत्वं खण्डयित्वा ब्रह्मणोऽधिकपरिमाणत्वेऽप्यविद्यामहिम्ना जगदुपादानत्वेऽविरोधं पर्यदर्शयत् । जीवब्रह्मणोरभेदे श्रुतिप्रामाण्येन साधिते, भेदे च प्रत्यक्षानुमानोपमानार्थापत्त्यागमानां प्रामाण्यासम्भवमुपदर्श्य सहानवस्थानत्व,-बाध्यबाधकत्व,भावाभावात्मकत्व,परस्परानात्मकत्वरूपस्य चतुर्विधस्यापि विरोधस्यानुपपत्तिं प्रत्यपादयत् ।

कर्मणाऽन्तःकरणशुद्धिरुपासनया चित्तस्थैर्यं ज्ञानेन च तत्त्वंपदार्थद्वयपरिशोधनपुरःसरं ब्रह्मात्मैकत्वं भवतीति काण्डत्रयसङ्गतिं प्रदर्श्य वेदानां शब्दरूपत्वाद्ब्रह्मणि च 'मुख्या लक्षणा गौणी'ति त्रिविधाया अपि शब्दवृत्तेरनुपपन्नतया पदार्थत्वासम्बन्धेन पदार्थाभावरूपस्य च वाक्यार्थरूपत्वानुपपत्तेर्ब्रह्मणः श्रुतिविषयत्वासम्भवमाशङ्क्य, शब्दागोचरत्वासङ्गत्व-

निर्गुणत्वहेतुभिः साक्षाच्छ्रुतिविषयत्वाभावेऽपि सगुणं द्वारीकृत्य निर्गुणे समन्वितानां वेदानां ब्रह्मपरत्वं श्रुतिप्रामाण्येन प्रतिष्ठाप्य, जहल्लक्षणाऽजहल्लक्षणाभ्यां च तत्त्वंपदयोः सामानाधिकरण्यस्याप्रतीत्या जहदजहल्लक्षणया विरुद्धांशत्यागपूर्वं तत्त्वमस्यादिवाक्यानाम्, अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधपूर्वं, ज्ञानसाधनविधानपूर्वं चोपासनावाक्यानां निर्गुणे ब्रह्मणि पर्यवसानाद्ब्रह्मणि समन्वितायाः उपनिषदो व्याख्यानयोग्यतां निरूपितवान्। 'यच्च किंच प्राणभृ'दिति श्रुत्या जातमात्रस्य प्राणयुक्तत्वे संसाधिते स्थावराणां जङ्गमानां च सर्वेषां प्राणिनां तारकब्रह्मोपदेशयोग्यतां बहुभिर्जन्मभिर्विमुक्तेः सौलभ्यं च निरूप्य अविमुक्ते पूर्वकृतानां कर्मणामप्रवेशं तत्र कृतानां च आमरणमवस्थितिमीश्वरानुग्रहेणैव काशीवाससम्भवमविमुक्तस्योषरत्वं तत्र कृतस्य पापस्य वज्रलेपात्मकत्वं चाभिधाय, विरुद्धं यथेष्टमाचरतां कालभैरवप्रापितत्रिंशत्सहस्रवार्षिकपापकर्मफलोपभोगान्ते प्राणोत्क्रमणक्षणे तत्रैव शरीरे तारकब्रह्मोपदेशेन विदेहताप्राप्तौ प्रतिपादितायां परमेश्वरानुग्रहशैथिल्येन मुमूर्षोश्चित्तवैकल्येन वा परोक्षज्ञाने समुत्पन्ने अयोनिजनीलकण्ठादिसारूप्यसामीप्यसालोक्यानुभवस्तदन्ते च परमेश्वरानुग्रहवशादपरोक्षज्ञानोत्पत्त्या सायुज्यप्राप्तिरिति तारकब्रह्मोपदेशस्य मोक्षसाधनत्वं स्फुटीकृतवान्।

सर्वस्य दृश्यत्वादात्मनश्च प्रत्यग्रूपतया सर्वस्मात्पार्थक्ये श्रुत्यादिप्रमाणसिद्धे स्वानुकूल्यं प्रदर्श्य ब्रह्मरूपतामात्मनः साधयितुं व्यावहारिके पूर्वं सर्वान्तर्गतत्वे कल्पितेऽपि साम्प्रतं तस्य पारमार्थिकं सर्वव्यतिरिक्तत्वं निर्दिश्यत इति दूषणाभावप्रतिपादना-

दात्मन्येव ब्रह्मसाक्षात्कारौपयिकप्रयत्नस्य न्याय्यत्वमुक्त्वा, आत्मनो ब्रह्मत्वे ब्रह्मणश्च परोक्षतानिवृत्त्यैवाऽपरोक्षत्वं शक्यमवाप्तुमित्यात्मनोऽपरोक्षत्वं समर्थितवान्। रामोऽहमिति भावयन्तो रामरूपा एवेति गूढार्थमुपदिश्य 'भगवति मायावैभवेन सर्वं सम्भाव्यते, अविद्याऽऽवृतिविशिष्टो जीवस्तु असमर्थ एवे'ति रामवत्सेतुबन्धनादिदुष्कराऽद्भुतकर्मसु सामर्थ्याभावेन रामरूपाणां तेषां मायाऽविद्यातत्कार्यवर्जितानां जीवन्मुक्ततां प्रतिपादितवान्। 'शरीराभावः सशरीरस्य भोगाभावो वे'ति द्विविधमपि जीवन्मुक्तेर्लक्षणं विरोधेन भोगापरिहार्यत्वेन च सन्दूष्य 'जीवतो मृतस्य वा तत्त्वज्ञानोत्पत्ति'रिति पक्षद्वयोत्थापनपुरःसरं स्वीकृते पूर्वस्मिन्पक्षे, तेन च कैवल्यावाप्तिं निरूपयन्नानन्दवनः शङ्कासमाधानविधया जीवन्मुक्तिमुपपाद्य ज्ञानावाप्तिसमनन्तरमेव शरीरनाशप्रसक्त्या जीवन्मुक्तेरसिद्धिरित्याशङ्कायां पुनरुपस्थापितायां, ज्ञानप्राप्तौ सर्वेषु कर्मसु क्षीणेष्वपि प्रारब्धकर्मसंस्कारवैभवेन शरीरं कुलालचक्रवद् भ्रमतीति प्रतिष्ठापितां जीवन्मुक्तिं श्रुत्या प्रमाणीकृतवानिति। इत्थंचाऽमुष्मिन् ग्रन्थे तत्र तत्र सम्भावितान् प्रतिपाक्षिणां पक्षानाक्षिपता श्रीमताऽऽनन्दवनेन श्रीरामचन्द्रस्य स्वयंभूत्वं स्वप्रकाशत्वं जगदुपादानत्वं तेन च ब्रह्मरूपत्वं पर्यवस्थापयता 'रामोऽह'मिति विभावयतां तद्रूपत्वं प्रतिपाद्य जीवात्मनोरभेदः साधु समसाधि।

उपक्रमे च रामतापिन्याः—

'चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ'।

इति श्रुत्या दशरथात्केवलादुत्पत्ती रामस्य प्रतिपादिता। व्याख्याकारस्तावदेतस्मिन् विषये—'एभ्यो माता गरीयसी'त्यनेन वचसा

जनकस्य प्राधान्यापेक्षया मातुः प्राधान्यस्य दृश्यमानतया मातृनामनिर्देशौचित्ये प्रतीयमानेऽपि,

'पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः'।

इति पितुरवयवानामधिकांशेन पुत्रे सङ्क्रमणात् पितृमात्रनिर्देशस्यौचितीं प्रदर्शयन् श्रुतिस्मृतिपुराणप्रामाण्योपन्यसनमुखेन 'एभ्यो माता गरीयसी'त्यत्र सुचिरं गर्भधारणादिक्लेशविशेषसहिष्णुतया जननीप्राधान्यनिर्देशस्योपपत्तिं निरूपितवान्। प्रसङ्गतश्च—'राति वितरति यथोचितं फलं कर्मानुसारेण राजते वा यो महीमधितिष्ठन्, स राम इति नाम्ना लोके विख्यातिमागतः। रावणादयो राक्षसा मरणं यतः प्राप्नुवन्ति ततोऽपि राम इति व्यपदिश्यते। रमणीयेन शरीरेण वा लोकत्रये प्रसिद्धं राम इति नाम। राहुर्यथा पर्वणि निष्प्रभं विधत्ते मनसिजं चन्द्रं तथा मनुष्यरूपेण रावणादीन् प्रापय्य तेजोहीनतां, राक्षसैरपहृतराज्याणां महीभुजां पुनरपि स्वस्वराज्ये स्थितिं धर्मज्ञानवैराग्यैश्वर्यं च सम्पादयन् स्वीयचरित्रादिना राम इत्युच्यते'। इत्थंविधा रघुकुले दशरथादुत्पन्नस्य रामस्य नामनिरुक्तीरुपदर्श्य समुदायोपलक्षकेन शब्दैकदेशेन तत्तदर्थोपलम्भसम्भवः स्फुटीकृतः। ततः क्रमेण देवताप्रसत्त्यै मन्त्रजपस्याऽवश्यकर्तव्यताप्रतिपादनेन लक्ष्मणस्य सीतायाश्च मन्त्रं समुद्धृत्य,

'विना यन्त्रेण चेत्पूजा देवता न प्रसीदति'।

इति मूलोक्तश्रुत्यनुसारेण तत्तत्कोणदलसूचनपूर्वकमङ्गादिकं नवाऽऽवरणदेवतास्तत्र तत्र लेखनीयानि मन्त्राक्षराणि ध्यायमानानि वसुरुद्रादीनि च निर्दिश्य चतुस्त्रिंशदक्षरात्मकमालामन्त्रोद्धारप्रदर्शनमुखेन

पूजासाधनं श्रीरामस्य यन्त्रं महत् प्रकटीकृतम्। इदं च श्रीरामयन्त्रं सावरणदेवतामन्त्राक्षरादिविन्यासपुरःसरमन्ते प्रदर्शयिष्यते। तत्र तत्र प्रसङ्गादुपन्यस्तानां तत्तद्ग्रन्थग्रन्थकाराणां नामान्यपि ग्रन्थान्ते सङ्ग्रहीष्यन्ते।

व्याख्यायां चैतस्याम्—अविमुक्तपदस्य ब्रह्मकाशीरूपमर्थद्वयं प्रकल्पितं दृश्यते। शब्दात्मकस्य परब्रह्मणश्च 'परापश्यन्तीमध्यमा-वैखरी'त्येवंरूपाश्चतुर्विधा अवस्थाः साधु सप्रपञ्चं प्रतिपादिताः। अन्येऽपि यथाप्रसङ्गं ते ते विषयाः स्पष्टरूपेणात्र चातुर्येण टीकाकृता न्यरूप्यन्त। यथाचास्या उपादेयत्वं व्याख्यायास्तथा दर्शनतः प्रतीयेतैवेति तत्र विषये किमपि लेखितुं नोत्सहे। क्वचित्क्वचिदिह दीपिकादितः प्रसिद्धटीकातो व्याख्यानप्रकारस्य वैलक्षण्यं विलोक्यते। 'तदेतद्व्याख्यानं विलोक्य तत एव सुव्यक्तं तदवगन्तुं शक्य'मिति तन्निर्देशमप्रासङ्गिकं मत्वा, श्रीवासुदेवेन्द्रशिष्येण उपनिषद्ब्रह्मयोगिना रचिता श्रीरामतापिनीयोपनिषद्व्याख्या अडयार् ( Adyar ) पुस्तकालयतः प्रकाशिताऽप्येका समुचितार्थशोभिनी समीचीना प्रकृतव्याख्यातः क्वचिद्वैचित्र्यमावहतीति तद्विषयेऽप्येतावदेव विलिख्य विस्तरभिया ग्रन्थसमालोचनमुपसंहृत्य ग्रन्थकर्तुर्विषये प्रस्तूयते किमपि।

## ग्रन्थकर्तुः समयादिनिर्णयः।

टीकाकर्तुरस्य आनन्दवनस्य का नाम जातिः कश्च वा समय इत्यत्र किमप्यैतिह्यं नोपलभामहे, केवलं कल्पनासाम्राज्यमवलम्ब्य तद्विषयं विचारं पुरस्तात्कुर्मः-श्रीरामचन्द्रस्य परमोपासको दर्शनशास्त्रीयं प्रगाढं पाण्डित्यं प्रकटयन् पदवाक्यप्रमाणपटुतमोऽयं दाक्षिण-

देशात्पूर्वैरध्युषितात् काशीं मुक्तिपुरीमागत्य संन्यासदीक्षामधिगतः साधनसम्पन्नो विशुद्धबुद्धिरुत्तमाधिकारी परमहंसपरिव्राजकाचार्यो योग्यताविषयिणीं परां कोटिमारूढवानासीदित्यत्र प्रत्यक्षं ग्रन्थ एव प्रमाणम् । एतेन हि ग्रन्थोपक्रमे पितरं कृष्णाख्यया मातरं च कमलाख्यया सूचयता नृहरिः पितामहत्वेन प्रपितामहश्च केशवत्वेन निरदिश्यत । गोत्रं हि वासिष्ठं देशश्च कुण्डिनपुरमिति गोत्राभिजनयोरपि सूचनं स्पष्टतया व्यधीयत । तथाहि पद्यमिदम्—

आसीद्वासिष्ठवंश्यो नृहरिरिति पुरा केशवाह्वस्य सूनु-
स्तस्मात्कृष्णाह्वयोऽभूद्धरणिसुरवरः पत्तने कुण्डिनाख्ये ।
तस्मात्सूनुर्गुणाब्धिः समजनि कमलाम्बः प्रभुत्वाद्यतीना-
मानन्दाऽऽद्यः स रामोपनिषदि विदधे साधु टीकां वनाख्यः ॥

इति । रामार्चनचन्द्रिकाकर्तुरानन्दवनादयमभिन्नो भिन्नो वेत्यत्र तु विचारे समुपस्थापिते, उभयो रामोपासकत्वाऽविशेषेण 'अयं पूजाक्रमो रामार्चनचन्द्रिकायां सपरिकरः समाकलनीयः' इत्येवं पूर्वतापिन्याः समाप्तौ दर्शनेन च विशेषतः सम्भाव्यते—यत् पूजाक्रमं प्रस्तुत्य तत्रानुक्तं विशेषं प्रकाशयन्तीमात्मनः कृतिं रामार्चनचन्द्रिकां नाम सूचयन्नयं प्रायस्तस्मादभिन्न एव स्यादिति । किञ्च—तस्मिन् ग्रन्थे 'मुकुन्दवन' इति गुरोर्नामोपलभ्यते । संन्यासिनस्तावत् सम्प्रदायानुरोधात् 'सरस्वतीगिरितीर्थाश्रम'प्रभृतिभिः सङ्केतैरलङ्कृता भवन्तीति न तिरोहितम् । प्रकृतानन्दवनस्यापि साम्प्रदायिकं 'वन'सङ्केतं प्राप्तस्य देशिको मुकुन्दवन इत्येतदुचितमेव । अतो मुकुन्दवनं गुरुत्वेन निर्दिशतो रामार्चनचन्द्रिकाकर्तुरानन्दवनादयमन्यो नास्तीति सङ्गतं निश्ची-

यते । उभयोर्भिन्नतां बोधयताम् 'ओफ्रेक्ट' ( Aufrecht ) महाशयानामाशयस्तु ततोऽन्येन साम्प्रतं केनावगन्तुं शक्येत ।

एतेन मुकुन्दवननामधेयः कश्चिदस्य संन्यासाश्रमे गुरुरासीदिति व्यक्तमेव । पूर्वाश्रमे तु राघवनामाऽमुष्योपाध्यायः स्यादिति कल्पयितुं शक्यते 'तस्य श्रीगुरुराघवस्य चरणद्वन्द्वारविन्दं नुमः' इत्युत्तरतापिनीयपद्यांशेन । कदाचित् राघवपदं रामचन्द्रमेवाभिप्रैतीत्यपि सम्भाव्यते । नात्र निश्चेतुं पार्यते किमपि ।

धर्मसिन्धौ काम्यव्रतफलप्रदर्शनप्रसङ्गे, निर्णयसिन्धौ रामनवमीनिर्णयप्रस्तावे, राघवभट्टनिर्मितायां शारदातिलकटीकायां च तत्र तत्र रामार्चनचन्द्रिकानामोल्लेखः समुपलभ्यते । धर्मसिन्धोर्निर्माणकालो हि तत्रैव ग्रन्थे संक्रान्तिनिमित्तदानप्रसङ्गे 'अयनांशा ज्योतिःशास्त्रे प्रसिद्धाः, ते चेदानीं द्वादशाधिकसप्तदशशतसंख्याके शालिवाहनशके एकविंशतिरयनांशाः' इति वचनावलोकनेन 'लोचनमेदिनीतुरङ्गमशशाङ्क- (१७१२) परिमितो नाम शालिवाहनशकः सिध्यति । अत्र च पञ्चत्रिंशदुत्तरशताङ्क(१३५)मेलनेन सप्तसागरसिद्धिभूमि(१८४७)संमितो वैक्रमाब्दः सञ्जायते । निर्णयसिन्धुस्तु'१८६८'मितेऽब्दे वैक्रमे निरमीयतेति 'वसुऋतुऋतुभूमिते गतेऽब्दे' इति तद्ग्रन्थसमाप्तिश्लोकतोऽवगम्यते । राघवभट्टोऽपि गगनशरपाण्डवक्षपाकर(१५५०)मितेऽब्दे विद्यमान आसीदिति निशम्यते । अतश्च निश्चीयते—काशीनाथोपाध्यायस्य धर्मसिन्धुकारस्य समयस्तावत् एकोनविंशशताब्दी, कमलाकरभट्टस्य निर्णयसिन्धुप्रणेतुः सप्तदशशताब्दी, षोडशशताब्दी च शारदातिलकटीकाकर्तुः राघवभट्टस्येति ।

रामार्चनचन्द्रिका च पूर्वोक्तेषु ग्रन्थेषु प्रमाणतयोपन्यस्तेति तदानीं तस्याः प्रसिद्धिः पूर्णरूपेणासीदिति खलु व्यक्तमेव। प्रसिद्धौ च कश्चित्कालविशेषोऽपेक्ष्यत इति प्रायो वर्षशतात्पूर्वं रामार्चनचन्द्रिकानिर्माणं सम्भाव्यते। तस्मात् पञ्चदशशताब्द्याः पूर्वार्धे आनन्दवन आसीदिति स्पष्टतया शक्यते गदितुम्। सोऽयं किल—दक्षिणदेशे समुद्भूतैस्तत्रैव विद्यमानैर्दाक्षिणात्यै राघवभट्टादिभिस्तत्र देशे प्रसिद्धाया रामार्चनचन्द्रिकाया नामोल्लिखितमित्यनेन, विदर्भप्रान्तान्तर्गतस्य कुण्डिनपुरस्य तत्पूर्वनिवासास्पदत्वेन विदर्भस्य दक्षिणदेशीयत्वेन च दाक्षिणात्यजातीय आसीदिति साम्प्रतं निःसंशयं कल्पयितुं पारयामः। अस्य मातापित्रादिनामान्यपि तथैवावगमयन्ति।

## आदर्शपुस्तकविवरणम्।

एतावता प्रबन्धेन ग्रन्थग्रन्थकारयोः परिचये वितीर्णे पुस्तकादिपरिचयं प्रस्तुत्य लेखमुपसंहरामः। कदाचन सरस्वत्येव पुस्तकालये विलोकितं हस्तलिखितमेकं श्रीरामोत्तरतापिनीयव्याख्यापुस्तकं क्वचन प्रसङ्गे लोचनगोचरतां प्रापयं श्रीमतां वाराणसेयराजकीयसंस्कृतपाठालयप्रधानाध्यक्षवरश्रीगोपीनाथकविराज एम्०ए० महोदयानाम्। दुर्लभमद्वितीयं तत्प्रकाशयितुमिच्छतां च तेषामनुज्ञया मुद्रयितुमुत्साहेन प्रवृत्तोऽहमचिरादेव तत्रत्यं मध्ये कञ्चिदंशं खण्डितमालोक्य खिन्नतां प्राप्तः, सरस्वतीभवनीयपुस्तकसङ्ग्रहेषु निरायासमेव पूर्वोत्तरयोर्द्वयोरपि तापिन्योर्व्याख्यां दृष्टिगोचरीकुर्वाणैः हस्तलिखितपुस्तकालयाध्यक्षैः श्रीमन्नारायणशास्त्रिभिः प्रोत्साहितः पूर्वतोऽप्युत्साहातिशयेन समुपक्रान्तवान्

प्रतिलिपीकृततत्पुस्तकमुद्रणकार्यम् । तत्र सरस्वतीभवनस्थेन कसंज्ञकेन सुन्दराक्षरेणापि लेखकमहानुभावप्रसादात्प्रतिपत्रं भूयसीभिरशुद्धिभिः पूर्णेन एकेनैवादर्शपुस्तकेन कथमप्यपारयं संशोधनकार्यं, न्यवेशयं च कचित्कचित्संशयस्थलेषु प्रश्नचिह्नानि । उत्तरतापिन्यास्तु द्वितीयस्माद-स्मद्गृहस्थात् खसंज्ञकात्पुस्तकतः साहायकं प्राप्य मुद्रितेऽस्मिन् ग्रन्थे, सरस्वतीभवनतः समुपलब्धस्य हस्तलिखितोत्तरतापिनीयपुस्तकान्तरस्य वङ्गाक्षरशालिनो गसंज्ञकस्य सङ्गृहीतवानस्मि यथोचितं ग्रन्थान्ते पाठान्तराणि ।

## उपसंहारः ।

चरमे च परमकारुणिकानां नैसर्गिकीं विधेयेषु सानुग्रहप्रसादपूर्णां दृशं निवेशयतां प्रतीक्ष्यचरणानां श्रीगुरूणां सादरं चरणारविन्दयो-रभिवन्दनेन, सहजं मयि वात्सल्यं सर्वदा निस्तुलमाबिभ्रतां ग्रन्थेऽत्र समुपलब्धान् सन्देहविशेषान् विचारोचितनिर्णयपुरस्कारेण सपरिश्रमं दूरीकृत्य परमामुदारतां प्रदर्शितवतां सरस्वतीभवनग्रन्थमालाप्रधान-संशोधकानां माननीयश्रीगोपीनाथकविराज एम्० ए० महाशयानां भूयसा ऽभिनन्दनेन, तत्र तत्र यथोचितविचारसूचनाभिः सर्वदा सहायतामाचरतां श्रीमतां सौहार्दनिकेतनाऽऽप्ततमनिर्व्याजस्नेहशालिनां होशिङ्गजगन्नाथ-शास्त्रि, खिस्तेनारायणशास्त्रि, बटुकनाथशर्म एम्०ए० महोदयानां सधन्य-वादशतप्रदानमुकारसंस्मरणेन, परमोदारभावेन यन्त्रलेखनोचितां दिशं दर्शयित्वा मदीयं कार्यं परिपूरितवतां पूज्यभ्रातृवरश्रीश्रीनाथशास्त्रिणां वात्सल्यभावस्य सादरं शिरसा धारणेन च कर्तव्यशेषमात्मनः पूरयन्,

केनापि कारणेन संमुद्रणे त्वराविशेषाश्रयणान्मदीयमतिमान्द्यान्मुद्रणा-लयदोषाद्वा सावधानं संशोधितेऽप्यत्र मनुष्यभावसम्भाविता अशुद्धीः शुद्धिपत्रात् संशोधयितुं विदुषः प्रार्थयमानो वितन्वानश्च जगत्पतेः परमेशितुश्चरणयोः प्रणतीः, विरमामि वृथा पल्लवितादमुतः प्रासङ्गिका-लेखादिति शम् ।

सरस्वतीभवनम्,
वाराणसी । } अनन्तरामशास्त्री वेतालः ।



॥ श्रीः ॥

# विषयसूची ।


| विषयाः | पृष्ठाङ्काः |
|---|---|
| शिष्टाचारसंमतं मङ्गलाचरणम् । | १ |
| टीकाकर्तुर्नामोल्लेखपूर्वं पित्रादिनिर्देशः । | १ |
| एतद्व्याख्याया नामधेयं सूचयित्वा रामाख्याया ब्रह्मविद्याया आवश्यकताप्रतिपादनेन उपनिषत्पदस्यार्थं निरूप्य रामपूर्वतापिन्युपनिषद्व्याख्यानिर्माणकारणनिरूपणम् । | १–२ |
| रामनामनिरुक्तिगर्भं निर्गुणावाप्तये सगुणोपासनाया निरूपणीयत्वकथनम् । | ३ |
| रामस्य चिन्मयत्वं निरूप्यार्थनिर्देशपूर्वकमहाविष्णुत्वप्रतिपादनम् । | ३–५ |
| जन्मपदार्थविचारपुरःसरं परब्रह्मणोऽपि तस्य जन्मग्रहणसमर्थनम् । | ५–६ |
| पुत्रशब्दार्थसूचनगर्भ पितुः प्राधान्यं प्रतिपाद्य दशरथस्य रामपितृत्वेन निर्देशः । | ६–७ |
| रघुकुलोद्भवस्य हरिरूपस्य रामस्य सप्रपञ्चं नामनिरुक्तयः । | ७–१२ |
| रामस्य ॐकाराभिन्नत्वमभिधाय जगत्कारणनिर्गुणब्रह्मरूपत्वप्रतिपादनम् । | १२ |
| सर्वस्य ब्रह्मात्मतासमर्थनम् । | १३ |
| रामस्य परब्रह्मत्वप्रतिपादनगर्भं ब्रह्मणोऽनन्तत्वं नित्यानन्दचिदात्मकत्वं च सप्रपञ्चं समर्थ्य निर्धर्मके ब्रह्मणि प्रवर्तमानानां सत्यादिपदानामखण्डार्थत्वस्य साधनम् । | १४–२२ |
| उपासकानां फलप्रदानार्थं निर्गुणस्यापि ब्रह्मणो रूपकल्पना । | २२ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| सगुणोपसनायाः फलत्वेन सगुणप्राप्तिं निरूप्य रूपकल्पनया रामपरब्रह्मप्राप्तिसौलभ्यकथनम् । | २२-२६ |
| रूपस्थितानां कल्पितानां देवतानां पुंस्त्र्यङ्गास्त्रादिरूपेण पञ्चविधां कल्पनां प्रदर्श्य तस्या रूपकल्पनाया उपासनार्थत्वोक्तिः । | २६-२७ |
| ब्रह्मादिदेवतानां रामादभिन्नतया राममन्त्रानुष्ठानादेव ब्रह्मादिमन्त्रानुष्ठानसिद्धिः । | २८ |
| अन्वर्थादिसंज्ञकस्य सर्वार्थवाचकस्य रामषडक्षरमन्त्रराजस्य जप्तव्यतां निरूप्य तत्प्रतिपादकस्य वचनस्य शास्त्ररूपतासमर्थनम् । | ,, |
| 'जप्तव्य' इत्यस्य विधित्वं समर्थ्य तद्विषयभूताया अंशत्रयवत्या भावनाया अवश्याभ्युपगन्तव्यत्वकथनम् । | २९ |
| जपविधौ मोक्षस्य भाव्यत्वं भावनां च शङ्कासमाधिमुखेन संसाध्य तद्विषयकस्य विधेरवश्याभ्युपेयत्वप्रतिपादनम् । | २९-३० |
| 'कोऽयं विधि'रिति प्रश्नस्य 'विधिरेवे'ति विशेषविधिरूपोत्तरप्रदर्शनम् । | ३०-३१ |
| 'जप्तव्य' इत्यस्य अपूर्व,नियम,परिसंख्याविधित्वासम्भवरूपं पूर्वपक्षं प्रदर्श्य अपूर्वविधित्वरूपस्योत्तरपक्षस्य निरूपणम् । | ३१-३३ |
| गुरोः सकाशान्मन्त्रग्रहणमुपदिश्य 'राममन्त्रजपं विना रामो न प्रसीदती'ति रहस्यकथनम् । | ३३ |
| क्रियाकर्मोपास्योपासकानामभेदप्रतिपादकस्य मन्त्रस्य शब्दार्थनिरुक्तया सर्ववाचकत्वोक्तिः । | ३३-३४ |
| वाच्यवाचकोभयरूपस्य रामस्य शरीरत्वेन यन्त्रकल्पनां निरूप्य वक्ष्यमाणयन्त्रेण विना देवताप्रसादाभावप्रतिपादनं, प्रथमोपनिषत्समाप्तिश्च । | ३४-३५ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| संक्षेपेण द्वितीयोपनिषत्प्रयोजनावतरणं कृत्वा, स्वभूशब्दार्थनिरूपणपुरःसरं शरीरस्य सकारणत्वेऽपि तदधिष्ठातू रामस्य सकारणत्वाभावात् स्वभूत्वसमर्थनम्। | ३६–३८ |
| रामस्य ज्योतीरूपत्वं सर्वात्मकत्वं च निरूप्य स्वप्रकाशचिन्मात्रत्वप्रतिपादनम्। | ३८–३९ |
| 'स्वप्रकाशे लक्षणाभावात्, प्रत्यक्षाद्यष्टविधप्रमाणानुपलम्भात्, आत्मनोऽप्रकाशरूपत्वाङ्गीकारे जगदान्ध्यप्रसङ्गाज्जगदध्यासाधिष्ठानत्वस्य च अनुपपत्त्यापातात् स्वप्रकाशत्वमनुपपन्न'मिति पूर्वपक्षस्य संक्षेपतो निरूपणम्। | ३९–४४ |
| सिद्धान्तमतेन निरुक्ते स्वप्रकाशलक्षणे दोषाभावं समर्थ्य अनुमानार्थापत्त्यागमप्रामाण्यसम्भवप्रदर्शनपुरस्कारेण वास्तविकसामान्याद्यभावेऽपि काल्पनिकसामान्यादिनाऽध्यासोपपत्तौ विरोधाभावं प्रदर्श्य स्वप्रकाशत्वसमर्थनम्। | ४४–४७ |
| अप्रकाशमानस्य जगतः स्वप्रकाशेन परमात्मना प्रकाश्यत्वम्। | ४७ |
| जगत ॐकारात्मकत्वमभिधाय अकारोकारमकारात्मकस्य विश्वतैजसप्राज्ञरूपस्य ॐकारस्य विराड्हिरण्यगर्भाव्याकृतात्मकत्वं निरूप्य तद्व्यतिरेकेण जगतश्च असत्ताप्रतिपादनम्। | ४७–४८ |
| ॐकारावयवानां त्रयाणां पौराणिकतान्त्रिकाभिमतार्थप्रदर्शनेन ऋषिभिः सङ्केतितं ऋषिच्छन्दोदेवतादिकं निर्दिश्य जगत ॐकारप्रभवत्वेन तदात्मकतायां स्मृतिप्रामाण्यं प्रकल्प्य 'ॐकारात्मकजगत्प्रकाशकस्य परमात्मनः स्वयंप्रकाशत्वं कैमुतिकन्यायसिद्ध'मित्याशयप्रकाशनम्। | ४८–४९ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| जगति प्रकाशत्वं समर्थ्य रामस्यैव तत्प्रकाशकत्वसंसाधनम् । | ४९–५० |
| संयोगादिसम्बन्धाऽसम्भवनिरूपणेन 'रामजगतोश्चिदचितोर्भास्यभासकभावो न सम्भवती'ति शङ्कां समाधातुमाध्यासिकं सम्बन्धं प्रदर्श्य तेनैव रामस्य स्वप्रकाशत्वसमर्थनम् । | ५०–५२ |
| स्वभुवः स्वप्रकाशस्यापि रामस्य रजःसत्त्वतमःप्रधानचिच्छत्त्युपाधिकविराडादिरूपत्रयेण जगतः सृष्टिस्थितिलयेषु कारणत्वम् । | ५२ |
| शमादिसाधनसम्पन्नानां मुमुक्षूणां मन्त्रार्थमननपूर्वकं मन्त्रजपमुपदिश्य वाच्यलक्ष्यरूपार्थद्वयात्मकस्य ब्रह्मणो रामस्यैव एकाक्षरबीजरूपमन्त्रेण प्रतिपाद्यत्वनिरूपणम् । | ५३ |
| रामतद्बीजयोरभेदाभिप्रायेण जगत्सर्गादिहेतुत्वसिद्धस्य रामगतस्य जगदाधारत्वस्य रामबीजे सदृष्टान्तं प्रदर्शनम् । | ५३–५४ |
| रामतद्बीजयोरभेदे पर्यवसानम् । | ५४ |
| 'विभ्रमाभावादविद्याभानस्यानुदयेन असङ्गस्य रामस्य ब्रह्मणोऽविद्याशबलितत्वं जगत्कारणत्वं च न सम्भवती'ति प्राभाकरमतोपन्यासः । | ५५–५७ |
| प्रतिपक्षिसंमतं प्रत्यययाथार्थ्यानुमानं खण्डयित्वा तदौपयिकानि तदुक्तानि दूषणानि चोद्धृत्य विभ्रमाणामवश्याश्रयणीयत्वोक्त्या विभ्रमानुमीयमानाऽविद्याशबलस्य ब्रह्मणो जगदुपादानत्वप्रतिष्ठापनम् । | ५७–५९ |
| परमतेन विभ्रमस्य विषयमन्तरेणाऽविद्यमानत्वं रजतादौ विषयत्वासम्भवं च प्रस्तुत्य निर्विषयेण विभ्रमेणा- | |

विषयाः पृष्ठाङ्काः

ऽविद्यानुमानाभावशङ्कायां अनिर्वचनीयत्वरूपाऽदूष्यविषयप्रदर्शनेन समाधानम् । ५९–६१

ख्यात्याद्यनुपपत्तेरनिर्वचनीयत्वे प्रामाण्याभावं प्रदर्श्य अनिर्वचनीयत्वस्य स्वरूपनिरूपणं न सम्भवतीति परपक्षोपन्यासः । ६१–६२

अनिर्वचनीयत्वलक्षणं साटोपं निरूप्य ख्यात्याद्यनुपपत्तेस्तत्र प्रामाण्यमुपन्यस्य अनिर्वचनीयविषयलब्धात्मलाभेन विभ्रमेणाऽनुमितयाऽविद्ययाऽऽलिङ्गितस्य श्रीरामाख्यस्य ब्रह्मणो जगदुपादानत्वजगदाधारत्वयोः साधनम् । ६२–६४

रेफाव्यवधानेन घटितस्य अकारद्वयमकारात्मकवर्णत्रयस्य बीजरूपत्वम् । ६५

मूर्तिशब्देन विराडाद्यात्मकब्रह्मादिरूपतया त्रयाणां वर्णानां ग्रहणम् । ,,

अकारद्वयमकाराणां सृष्ट्यादिरूपत्वमुक्त्वा तेषां शक्तिमत्त्वसाधनेन ब्रह्माद्यात्मकत्वनिरूपणम् । ,,

बीजस्य रामाद् भेदविवक्षया वाचकत्वपक्षे, स्वप्रकाशब्रह्मोपस्थापके रेफे बीजावयवभूतैः अकारद्वयमकारैर्ब्रह्मविष्णुमहेश्वराणां प्रतिपादनम् । ६६

अग्निवाचकतया प्रसिद्धस्य रेफस्य स्वप्रकाशपरत्वम् । ,,

ब्रह्मोपस्थापकस्य रेफस्य त्रिगुणजदुत्थापकैर्वर्णान्तरैः सामानाधिकरण्याभावशङ्कासमाधानम् । ६६–६७

रेफारूढवर्णत्रयस्य विराडाद्यात्मकप्रणवाभिन्नतया प्रणवस्य बिन्द्वादीनामवयवानामप्युपसंहरणीयत्वमभिधाय प्रणवस्य सप्तावयवत्वप्रदर्शनम् । ६७

सांख्याभिमतं प्रकृतेर्जगत्कारणत्वं निरस्य परमाणूनां

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| च जगदुपादानत्वं निषिध्य, अघटमानघटनापटीयस्याऽविद्यया शबलितस्य ब्रह्मणो जगदुपादानत्वे विरोधाधाभावप्रदर्शनं, द्वितीयोपनिषत्समाप्तिश्च । | ६७-६८ |
| प्रथमद्वितीयतृतीयोपनिषद्विषयान् संक्षेपतो निर्दिश्य, विराट्शक्त्यभिधेययोः प्रकृतिपुरुषयोः सीतारामयोर्मन्त्रराजे बीजाभिन्नत्वेन ज्ञातव्ययोश्चतुर्दशभुवनसृष्टिस्थितिलयकारणत्वनिरूपणम् । | ६९-७० |
| मायामनुष्यमूर्ते रामस्य परमात्मनः सृष्टेषु भुवनेष्वनुप्रवेशः, 'अस्तिभातिप्रियरूपनामा'त्मनां पञ्चांशानां तत्र प्रतिभासश्च । | ७०-७१ |
| सृष्टे जगति रामस्यानुप्रवेशसमर्थनम् । | ७१ |
| रामपदसमानाधिकृतस्य जीवलक्षकस्य नमःपदस्य स्वप्रकाशत्वादिगुणवशेन जीवपरमात्मनोरेकत्वे पर्यवसानमुक्त्वा 'संसारनिवर्तकेन परमात्मसाक्षात्कारेण शुद्धस्य जीवस्य चिन्मात्रपरमात्मतादात्म्यानुभवो भवती'ति तदभिप्रायप्रदर्शनं, तृतीयोपनिषत्समाप्तिश्च । | ७१-७२ |
| चतसृणामप्युपनिषदां संक्षेपतः प्रतिपाद्यार्थकथनपूर्वकं जीवपरमात्मनोस्तादात्म्यं सप्रपञ्चं प्रतिपाद्य तेन अशनायादिषडूर्मियोगनिरसनम् । | ७३-७४ |
| विरुद्धधर्मवतोरपि परापरयोरभेदं प्रत्यक्षादिभिरभेदप्रतिपादिकाभिः श्रुतिभिश्च पर्यवस्थाप्य तत्र भेदे चतुर्विधविरोधासिद्धेः प्रतिपादनम् । | ७४-७६ |
| राममन्त्ररामयोर्वाच्यवाचकभावं संसाध्य मन्त्रानुष्ठानार्थानुसन्धानयोः प्रत्येकं पापक्षयादिफलकत्वेऽपि तद्योगेन सकलोपासकानां मोक्षफलप्राप्तिकथनम् । | ७६-७७ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| नित्यस्यापि मोक्षस्यौपचारिकं फलत्वम् । | ७७ |
| रामगीतादिनापि रामसाक्षात्कारस्य सम्भवे, बीजात्मकस्य मन्त्रस्यैव विशेषतो रामसाक्षात्कारे हेतुत्वम् । | ७७-७८ |
| वक्ष्यमाणपूजाङ्गत्वेन बीजशक्तिन्यासस्थानसूचनम् । | ७८ |
| बीजशक्तिभ्यां पृथक्त्वेन तत्संश्लिष्टत्वेन वा कीलकं विज्ञाय मन्त्रस्य अभीष्टार्थे विनियोगकरणेनैव फलदायकत्वम् । | ७८-७९ |
| सर्वेषां मन्त्राणां पूर्वोक्तसाधारणप्रकारवत्तां व्याहृत्य पूजनीयस्य रामस्य तदुत्पन्नस्य जगतश्च अग्नीषोमात्मकत्वं निरूप्य धृष्टिप्रभृतिभिरष्टभिर्मन्त्रिभिः परिवृतस्य प्रकृतिरूपसीताऽलङ्कृतवामाङ्कस्य रामस्य स्वरूपवर्णनम् । | ७९-८१ |
| श्रीरामसीतालक्ष्मणानां त्रिकोणयन्त्रात्मकत्वमुक्त्वा योन्याकारस्य त्रिकोणस्य जगत्कारणत्वसमर्थनम् । | ८१ |
| लक्ष्मणसीतयोर्मन्त्रावुद्धृत्य रावणार्दितानां देवानां त्रिकोणाधिष्ठातृनारायणशरणप्राप्तिवर्णनम् । | ८१-८२ |
| स्तुत्यैव प्रसीदतः प्रभोर्देवकृतां स्तुतिं प्रस्तुत्य 'सीतया रक्षाश्रियौ दापयित्वा रावणं जही'ति प्रार्थयमानानां देवानां परमात्मनि तत्परत्वाभिधानम् । | ८२-८४ |
| वसिष्ठादिभिः स्तुतेन भगवता नूतनापराधं कर्तुं प्रेरितो रावणः 'स्वनिवृत्तये सीतां हृतवा'निति प्रतिपाद्य रावणनामधेयस्य द्वेधा निर्वचनम् । | ८३ |
| हृतसीतान्वेषणाय भुवं विचरतोः कबन्धासुरं हत्वा तद्वचनेन शबरीसमीपं गतयोस्तत्पूजितयो रामलक्ष्मणयोः, द्वारीभूतेन भक्तेन हनुमता समाहूताय कपीश्वराय सुग्रीवाय सकलवृत्तान्तकथनम् । | ८४-८५ |
| वालिवधं कर्तुं रामे शङ्कितेन सुग्रीवेण दर्शितं वालिनैव | |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| निष्पिष्टं दुन्दुभिशरीरं दशयोजनदूरं क्षिप्त्वा सप्ततालांश्च विभिद्य सुग्रीवेण सह किष्किन्धां गतेन रामेण सुग्रीवगर्जनया गृहान्निर्गतं वालिनं निहत्य सुग्रीवस्य राज्ये प्रतिष्ठानम् । | ८५-८६ |
| सुग्रीवाज्ञया सीताप्रवृत्तये दिशो गतेषु वानरेषु, समुद्रं तीर्त्वा लङ्कां गतस्य सीतां दृष्टवतो हतराक्षसस्य नगरीं दग्धवतो हनुमतः श्रीरामसमीपमागत्य तत्त्वतः सकलवृत्तान्तनिवेदनम् । | ८६ |
| क्रुद्धस्य सायुधस्य वानरैः सह लङ्कां गतस्य सङ्ग्रामे कुम्भकर्णेन्द्रजित्सहितं रावणं हत्वा लङ्काराज्ये विभीषणं स्थापितवतः शुद्धया सीतया सार्धमयोध्यामागतस्य द्विभुजस्य रामस्य भरतसमर्पितराज्यप्राप्तिसूचनम् । | ७८ |
| दक्षिणे भुजे ज्ञानमुद्रां वामे च बलप्रकटनं धृतवन्तं रामं निर्दिश्य ज्ञानमुद्रास्वरूपनिरूपणम् । | ८८ |
| षट्कोणावयवभूतत्रिकोणद्वयनिर्देशमुखेन दीर्घाक्षरयुक्तानां हृदयादीनामङ्गानां पूज्यस्थानक्रमं निरूप्य आवरणगतद्वितीयादिशब्दोपपत्तिप्रदर्शनपुरःसरं नवावरणदेवतानां निरूपणम् । | ८८-९१ |
| लेखनप्रकारसूचनगर्भं रामयन्त्रविशेषे प्रतिदलं लेखनीयानि मन्त्राक्षराणि बीजादीनि च प्रतिपाद्य तत्र निर्दिष्टानां वसुरुद्रादीनां ध्येयत्वकथनेन नृसिंहवराहबीजोद्धारप्रदर्शनम् । | ९१-९७ |
| राज्याभिषिक्तस्य रामस्य सप्तचत्वारिंशदक्षरात्मकं मालामन्त्रमुद्धृत्य सर्वात्मकस्य पूर्वोक्तयन्त्रस्य आयुरारोग्यपुरु- | |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| षार्थचतुष्टयप्रदायकमुक्त्वा पृथग्जनतो गोपनीयत्वाभिधानं, चतुर्थोपनिषत्समाप्तिश्च । | ९७-१०२ |
| द्वारपूजाभूतादिशोधनविधिप्रदर्शनपूर्वकं पीठस्य प्रत्येकभागार्चनमाचार्यध्यानमाधारशक्त्यादिकल्पनं दिग्देतावाहनार्चने च सूचयित्वा रामचन्द्रस्य गन्धपुष्पनैवेद्यादिभिः पूजनविधानोपदेशः । | १०३-१०७ |
| ध्यानपूर्वकजपस्य समर्पणीयत्वमुक्त्वा प्रदर्शितस्य पूजाङ्गध्यानस्य मोक्षफलप्रापकत्वकथनम् । | १०७ |
| रघुकुलेऽवतीर्णस्य राघवाख्यस्य विष्णोः स्वरूपेऽवस्थानम् । | १०७-१०८ |
| परमेश्वरोपासनायाः परमपदहेतुत्वप्रतिपादनेन पूर्वतापिनीयोपनिषत्पाठफलनिरूपणम् । | १०८ |
| टीकाकर्तुर्नामधेयं काश्यां टीकानिर्माणं च सूचयित्वा पूर्वतापिनीव्याख्याया उपसंहारः । | १०८-१०९ |
| मङ्गलाचरणपित्रादिनिर्देशपुरःसरं नामधेयसूचनमुखेन टीकाया निर्माणकारणप्रस्तावः । | १११-११२ |
| ब्रह्मविद्यायाः संसारोच्छित्तिहेतुत्वं निरूप्य रामोत्तरतापिन्या निर्गुणरामोपासनपरत्वाभिधानम् । | ११२ |
| उपनिषत्पदार्थनिरूपणपूर्वकं काण्डत्रयस्य सङ्गतिप्रदर्शनेन शब्दमयस्यापि वेदस्य श्रीरामब्रह्मपरत्वं महताऽऽटोपेन प्रतिष्ठाप्य श्रुतिरूपाया उपनिषदो व्याख्यानयोग्यतासमर्थनम् । | ११२-११६ |
| उत्तरतापिन्युपनिषदोऽधिकारिणः कर्मफलविमुखाः परमहंसपरिव्राजका एव । | ११६ |

| विषयाः | पृष्ठाङ्काः |
|---|---|
| कुरुक्षेत्रस्यार्थद्वयप्रतिपानपूर्वकं 'देवयजनं ब्रह्मसदनं किं नाम कुरुक्षेत्र'मिति योगीश्वरं याज्ञवल्क्यं प्रति बृहस्पतेः प्रश्नः । | ११६-११७ |
| 'अविमुक्तमेव तत्, यत्रकुत्रस्थोऽपि प्राणी तत्स्थमेवात्मानं विद्यात्, अत्राविमुक्ते प्राणोत्क्रमक्षणे रुद्रकर्तृकतारकब्रह्मराममन्त्रोपदेशादमृतत्वं लभ्यत इत्यतोऽन्यद्विहायाऽविमुक्तमेव सेव्य'मिति याज्ञवल्क्योत्तरं प्रदर्श्य, अविमुक्तपदस्य ब्रह्मकाशीरूपार्थद्वयप्रतिपादनमुखेन प्रश्नोत्तररूपप्रथमकण्डिकायाः प्रकारद्वयेन व्याख्यानम् । | ११७-१२१ |
| सर्वेषां प्राणधारणाविशेषात् स्थावरजङ्गमादेः प्राणिमात्रस्य तारकब्रह्मोपदेशयोग्यता । | १२१-१२२ |
| ईश्वरानुग्रहलभ्येऽविमुक्ते पूर्वजन्मेहजन्मोपार्जितानां कर्मणामप्रवेशं निगद्य पुण्यपापोषरभूते तत्र कृतानां कर्मणां वज्रलेपायितत्वकथनम् । | १२३ |
| अविमुक्तप्रान्ते प्रतिषिद्धयथेष्टाचरणबद्धादराणां त्रिंशत्सहस्रवर्षावधि कालभैरवप्रापितनानायोनिप्राप्तिः । | १२४ |
| प्राणोत्क्रमणसमये च तेनैव शरीरेण कृतकर्मफलानुभवानन्तरं तारकब्रह्मोपदेशाद्विदेहत्वलाभः । | ” |
| ईश्वरानुग्रहस्य शैथिल्येन मुमूर्षोरन्तःकरणस्य वैकल्येन वा गलगरलादिसारूप्यसामीप्यसालोक्यानुभवान्ते सायुज्यप्राप्त्या तारकब्रह्मोपदेशस्य निर्विवादं मोक्षहेतुत्वप्रतिपादनं, प्रथमकण्डिकासमाप्तिश्च । | १२४-१२५ |
| भरद्वाजप्रश्ने याज्ञवल्क्योत्तररूपं तारकस्वरूपं निरूप्य अर्थसृष्टेः शब्दसृष्टेश्च क्रमप्रदर्शनम् । | १२६-१२७ |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| शब्दात्मनः परस्य ब्रह्मणश्चतुरवस्थाशालित्वमुक्त्वा, प्रथमावस्थायाः पराख्याया विस्तरशः स्वरूपं प्रदर्श्य तस्या एव द्वितीयावस्थां प्राप्तायाः पश्यन्तीत्वं पश्यन्त्याश्च तृतीयावस्थां लब्धाया मध्यमात्वं निरूप्य प्रपञ्चस्य शब्दविवर्तत्वसाधनपूर्वकं वैखरीत्याख्याया बिन्दोश्चतुर्थावस्थायाः प्रतिपादनम् । | १२७-१२९ |
| मन्त्रबीजमस्तके नादबिन्दुकलाप्रदर्शनमुपदिश्य अर्थसृष्टिशब्दसृष्ट्योर्वाच्यवाचकरूपत्वोक्तिः । | १३० |
| ॐ रामाय नमः, ॐ रामचन्द्राय नमः, ॐ भद्राय नम इति मन्त्रत्रयमुपदर्श्य तत्र षडक्षरमन्त्रस्यैव सकलमन्त्रार्थवाचकत्वेन सर्वात्मकस्य तारकस्वरूपत्वकथनम् । | १३०-१३१ |
| तारकस्य सकलप्रपञ्चकार्यभूतत्वमिव सकलकारणॐकारात्मकत्वमभिधाय, तस्य ॐकारादनतिरिक्तत्वं प्रतिपाद्य ॐकारस्यापि तारकादनतिरिक्तत्वप्रतिपादनम् । | १३१ |
| षण्णां मन्त्रवर्णानां ब्रह्मरूपत्वं सच्चिदानन्दात्मकत्वं च । | ,, |
| तारावयवतारकब्रह्माक्षराणामैक्यं सम्पाद्य संन्यासिभिर्मुमुक्षुभिरर्थानुसन्धानपूर्वकं तस्यैव जपेनोपासना कर्तव्येति तात्पर्यार्थप्रदर्शनम् । | ,, |
| अकारोकारमकारार्धमात्रबिन्दुनादरूपाणां षण्णामक्षराणां षडवयवार्थवाचकत्वं प्रदर्श्य तारकत्वादस्य मन्त्रस्य तारकरूपत्वमुक्त्वा ब्रह्मात्मकत्वेन ज्ञातव्यस्य तस्यैव मन्त्रान्तराऽननुसन्धानोपदेशमुखेन उपास्यत्वकथनम् । | १३२-१३३ |
| 'गर्भजन्मजरामरणसंसारमहाभयात्तारयती'ति तारकस्य अन्वर्थनामता । | १३३ |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| 'तारकमिदं नित्यमधीयानो ब्राह्मणः पाप्मादिकं तीर्त्वा जीवन्मुक्तिं त्रैलोक्यपूज्यतां विदेहमुक्तिं चाऽधिगच्छती'ति तारकमन्त्रपाठफलप्रतिपादनम् । | १३४–१३५ |
| रामचन्द्रस्यैव एतन्मन्त्रमहिमाभिज्ञत्वनिरूपणं, द्वितीयकण्डिकासमाप्तिश्च । | १३५ |
| विश्वतैजसप्राज्ञेश्वरा जाग्रत्स्वप्नसुषुप्तितुरीयावस्थासाक्षिणो लक्ष्मणशत्रुघ्नभरतरामाः तत्प्रकृतिभूता सीता चेति सर्वस्य स्थूलसूक्ष्मप्रपञ्चजातस्य ॐकारात्मकतारकब्रह्मवाच्यत्वम् । | १३६–१३८ |
| ब्रह्मचारिगृहिवनस्थैः ॐकारात्मकतया षडक्षरतारकब्रह्मप्राधान्येन, परिव्राजकैस्तु तारकषडक्षरात्मकतया ॐकारप्राधान्येन उपासनं विधेयम् । | १३८–१३९ |
| भावाभावात्मकस्य सर्वप्रपञ्चस्य वाच्यत्वं, सकलवागात्मकस्य ॐकारस्य च तद्वाचकत्वम् । | १३९–१४० |
| परमार्थरूपश्रीरामावाप्तये वाच्यवाचकयोरभेदप्रदर्शनरूपं नामरूपात्मकस्य सर्वस्य जगतो ब्रह्मरूपत्वं प्रतिपाद्य शङ्कासमाधिभिस्तत्समर्थनम् । | १४०–१४२ |
| आत्मव्यतिरिक्तकेवलस्वरूपनिरूपणेन रामावाप्त्यसम्भवमाशङ्क्य 'अयमहमस्मी'त्यनुभवगोचरस्यात्मनो ब्रह्मरूपत्वप्रतिष्ठापनम् । | १४२–१४३ |
| आत्मनो ब्रह्मरूपत्वादेव सिद्धस्य अपरोक्षत्वस्य पुनर्दृढीकरणम् । | १४३ |
| विश्वादीनां त्रयाणां पूर्वपूर्वप्रविलापेन तुरीयस्य प्रतिपत्तिसिद्ध्यै कार्षापणवत् तस्यात्मनश्चतुष्पात्त्वनिरूपणेन शुद्धब्रह्मावाप्तिसूचनम् । | १४४ |

विषयाः पृष्ठाङ्काः

जागरितस्थानादिप्रथमपादप्रदर्शनपूर्वकं प्रणवस्य प्राधान्याप्राधान्यविषयकं विचारं प्रस्तुत्य प्रथमपादस्य विराडकारार्थत्वप्रतिपादनम्। १४५-१४६

प्रदर्शितस्य स्वप्नस्थानादिरूपस्य द्वितीयपादस्य तैजसोकारार्थत्वम्। १४६-१४७

सुषुप्तस्वरूपं निरूप्य सुषुप्तस्थानादिरूपस्य तृतीयपादस्य प्राज्ञमकारार्थत्वाभिधानम्। १४७-१४९

प्राज्ञस्यात्मनः सर्वेश्वरत्वादिधर्मप्रतिपादनेन सर्वजनकत्वमुक्त्वा नवहिःप्रज्ञत्वादिपञ्चदशधर्मविशिष्टस्य शङ्करस्य अर्धमात्रनादरूपच तुर्थपादात्मकत्वनिरूपणम्। १४९-१५१

आचार्योक्तं जाग्रदाद्यवस्थास्वरूपं प्रदर्श्य वार्तिकमतेन विराट्हिरण्यगर्भकारणात्मकोपाधित्रयवर्जितस्य तुरीयपदत्वप्रतिपादनम्। १५२

सदोज्ज्वलत्वादिसप्तविशेषणविशिष्टत्वेन विज्ञेयत्वमात्मनो निर्दिश्य 'अहं ब्रह्मास्मि' 'ब्रह्माहमस्मी'त्युभयविधया भावनया अशनायाद्यपरोक्षनिवृत्तमात्मानमात्मत्वेन विज्ञाय रामचन्द्रेण सहैक्यं कुर्यादिति प्रत्यगात्मतया रामोपसनाप्रदर्शनम्। १५२-१५४

योगचतुष्टयं प्रदर्श्य तेन 'रामोऽह'मिति साक्षात्कारावधि विभावयन्तः संसारिणोऽपि नियतं रामरूपा एवेति प्रतिपादनम्। १५४-१५५

'रामोऽह'मिति विभावयतां मायाऽविद्याकार्यराहित्येन सेतुबन्धनादिदुष्करे कर्मण्यसमर्थानां जीवन्मुक्तत्वम्। १५५-१५६

जीवन्मुक्तिस्वरूपविचारं प्रस्तुत्य देहवतो देहासम्भवा-

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| ऽभावेन भोगस्य चापरिहार्यत्वेन जीवन्मुक्तेरनुचितत्वमाशङ्क्य जीवतस्तत्त्वज्ञानोत्पत्तिसाधनेन तदौचित्यनिरूपणम् । | १५६–१५८ |
| प्रकारान्तरेण प्राप्तां जीवन्मुक्तेरसिद्धिं परिहृत्य तत्र परमहंसस्वरूपप्रतिपादिकाया जाबालोपनिषच्छ्रुतेरानुकूल्यं प्रदर्श्य श्रीरामरूपाणां तेषां स्वच्छन्दचारित्वस्य पक्षान्तरेण प्रदर्शनम् । | १५८–१५९ |
| 'इत्थंविधां ब्रह्मविद्यामुक्तप्रकारेण विदन् रामोपासकस्त्रैलोक्यपूज्यो भवतीति भरद्वाजं प्रति याज्ञवल्क्योपदेशः, तृतीयकण्डिकासमाप्तिश्च । | १५९ |
| कण्डिकात्रयगतार्थसूचनपूर्वकं रामचन्द्रप्राप्तिसूचिकायाश्चतुर्थकण्डिकाया उपक्रमः । | १६० |
| 'पूर्वोक्तश्चतुष्पादात्मा कथं विज्ञेय'इति प्रश्ने, 'वरणायां नाश्यां च प्रतिष्ठितेऽविमुक्ते तुरीयसन्धिरूपे प्रतिष्ठितः सचात्मा अविमुक्त एव प्रत्यगात्मतयोपासनीयः' इति याज्ञवल्क्योत्तरं प्रकल्प्य वरणानाशीशब्दयोरन्वर्थताप्रदर्शनम्। | १६०–१६१ |
| 'व्यष्टिरूपेण भ्रुवोर्घ्राणस्य च सन्धिः स्वशरीरं, समष्टिरूपेण द्यौर्लोकस्य परस्य च सन्धिः काश्यभिधेयमविमुक्तमेव तुरीयसन्धिस्थान'मिति रहस्यमुद्धाट्य तस्य सन्धेर्ब्रह्मविद्भिरुपास्यत्वकथनम् । | १६२ |
| भ्रूघ्राणसन्धिरूपेऽविमुक्ते परमात्मोपासनां पुनर्निर्दिश्य देवस्यभ्रूमध्यवर्तित्वे स्मृत्यादिप्रमाणोपसङ्ग्रहः । | १६३–१६४ |
| 'यत्र कुत्रापि तिष्ठन् पूर्वतापिन्युक्तसगुणोपासनावशेन | |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| स्थिरचित्तो मुमुक्षुः भ्रुवोर्घ्राणस्य च सन्धौ निर्गुणब्रह्मरूपं राममुपासीते'ति सर्वशास्त्रार्थपरिसमाप्तिं प्रदर्श्य 'पूर्वोक्तोपासनाविदुपासकस्त्रैलोक्यगुरुत्वं प्राप्तोऽविमुक्तज्ञानमुत्पादयितुं प्रभवती'ति गूढार्थाविष्करणम् । | १६४-१६५ |
| अत्रिं प्रति याज्ञवल्क्योक्ताया आख्यायिकाया उपक्रमः । | १६५ |
| काश्यां रामचन्द्रमन्त्रं जपते शिवाय प्रसन्नस्य श्रीरामस्य 'काश्यां मरणं मोक्षद'मित्येवंतात्पर्यकं वरप्रदानं प्रस्तुत्य 'तुरीयसन्धिश्रवणं श्रद्धया विधेय'मिति प्रतिपादनम् । | १६५-१६६ |
| 'शिवाद् ब्रह्मणो वा लब्धषडक्षरमन्त्रा जीवन्मुक्ता मोक्षमन्ते लभन्ते'इति शिवादिब्रह्मादिसम्प्रदायद्वयं प्रदर्श्य 'रामसाक्षात्कृतये सर्वदाऽविमुक्तमेवाश्रयन् जन्मान्तरितदोषवर्जितो भवती'ति अविमुक्तस्य आशरीरपातमहेयत्वप्रतिपादनम् । | १६७ |
| अविमुक्तादीनामधिभूतत्वादिना समष्टिव्यष्टिगतत्वेन च निरूपणं, चतर्थकण्डिकासमाप्तिश्च । | " |
| 'ईश्वरानुगृहीतो ब्रह्मविद्याप्राप्तये प्रभवती'ति श्रीरामप्रसादसम्पादनोपायभूतान् मन्त्रानुपदिश्य भरद्वाजपृष्टेन याज्ञवल्क्येन प्रोक्तां रामचन्द्रशिक्षितेन ब्रह्मणाऽऽकलितां गाथां पुरस्कृत्य अद्वैतपरमानन्दाद्यात्मकस्य भूर्भुवःस्वःस्वरूपस्य श्रीरामचन्द्रस्य नमस्कारात्मकानां सप्तचत्वारिंशन्मन्त्राणां निरूपणम् । | १६८-१७४ |
| 'श्रीरामस्य सर्वात्मकत्वप्रतिपादकैर्नृसिंहतापिन्यादिषु सङ्गृहीतैरेभिर्मन्त्रैः स्तुवन् सर्वत्र रामं पश्यति मुक्तिं च विन्दती'ति प्रतिपादनेन ग्रन्थसमाप्तिप्रदर्शनम् । | १७४-१७५ |

| विषयाः | पृष्ठाङ्काः |
| --- | --- |
| व्याख्यायाः प्रशंसागर्भं स्वरूपमुपदर्श्य तस्याः परिशीलनेन रामप्रियाः प्रसीदन्तु इत्याशंसाप्रदर्शनपूर्वकं टीकाकर्तुः काश्यां टीकानिर्माणसूचनम् । | २७५ |
| शिवस्य नत्यात्मक'महं देहान्योऽस्मी'तिप्रतिपादकं च पद्यद्वयमुपन्यस्य उत्तरतापिनीव्याख्याग्रन्थोपसंहारः। | १७५-१७६ |


इति ।



॥ श्रीगणेशाय नमः ॥

॥ श्रीरामाय नमः ॥

# श्रीरामपूर्वतापिनी ।

## आनन्दवनकृतया रामकाशिकाख्यया व्याख्यया सहिता ।

सत्यं सत्यतया हि यस्य निखिलं रज्जौ यथा कुण्डली
यस्यानन्दतया प्रपञ्चरचना सानन्दथुर्भ्राजते ।
यच्चिद्रूपतया चिदात्मकमिवाऽऽभाति प्रपञ्चादिकं
सत्यानन्दचिदात्मकं श्रुतिवचोगीतं भजे राघवम् ॥

एकेनैव करेण शिष्यशिरसि व्यापारितेन क्षणा—
दाविच्छेदमतुच्छमस्यति तमःसङ्घातमाभ्यन्तरम् ।
तस्यैतस्य गुरोरपूर्वदिवसाधीशस्य पादाम्बुज—
द्वन्द्वाधिश्रयणीः परागकणिका भक्त्या नमामस्तमाम् ॥

आसीद्वासिष्ठवंश्यो नृहरिरिति पुरा केशवाह्वस्य सूनु-
स्तस्मात्कृष्णाह्वयोऽभूद्धरणिसुरवरः पत्तने कुण्डिनाख्ये ।
तस्मात्सूनुर्गुणाब्धिः समजनि कमलाम्बः प्रभुस्त्वाद्यतीना-
मानन्दाद्यः स रामोपनिषदि विदधे साधु टीकां वनाख्यः ॥

श्रीरामोपनिषद्वृत्तिं विधास्ये रामकाशिकाम् ।
रामभक्त्या प्रयुक्तोऽहं रामावाप्त्यै तदर्थिनाम् ॥

इह खलु सुखदुःखलाभालाभयोरन्यतरस्य पुरुषार्थत्वावगमात्केवलनिखिलदुःखजालमायाऽपारसंसारपारावारपर्यटनपरिश्रान्तमनसां सुमनसामुभयविधस्यापि पुरुषार्थस्याऽनुपलम्भाद्दर्शपूर्णमासादिवेदविहितकर्मनिर्माणं निर्माय प्रवृत्तानां स्वर्गसुखलाभेऽपि, तस्य क्षयित्वसातिशयत्वादिदोषोन्मेषदूषितत्वेन पुरुषार्थत्वाऽनुपपत्तेः स्वर्गादावप्यनभिरतिमासेदुषां प्रचुरतरदुःखपटलविपरिलोपनित्यनिरतिशयानन्दप्रतिलम्भलक्षणपुरुषार्थमपेक्षमाणानां दुःखमयस्य संसारस्याविद्याविद्यमानत्वादविद्याविच्छेदमन्तरेणोच्छेदाऽसम्भवादविद्यायाश्च ब्रह्मात्मैकत्वसाक्षात्काररूपविद्यैकापनोद्यत्वात् श्रीरामाख्यां ब्रह्मविद्यां रमणीयतरामुपजनयितुं श्रीरामतापिनीयोपनिषत्पूर्वोत्तरसगुणनिर्गुणोपासनभेदेनाऽधिकारितारतम्यात्प्रवर्तते। तत्र चोपनिपूर्वात्सदेर्निष्पन्नस्य क्विबन्तस्योपनिषत्पदस्य मुख्यतः श्रीरामचन्द्रब्रह्मविद्यापरत्वेऽपि ब्रह्मविद्यार्थायां श्रुतौ लक्षणया प्रवृत्तिः। नह्यभिधैव शब्दस्य वृत्तिर्न लक्षणेति वक्तुं युक्तम्। वृद्धैरुभयोरपि शब्दवृत्तित्वेन स्वीकारात्। नन्वेवमस्तु श्रीरामतापिनीयमप्युपनिषत्, तथापि नेयं व्याख्यानमर्हति प्राचीनैरेवाऽऽचार्यैर्व्याकृतत्वात्। सत्यम्, तथापि प्राचीनव्याख्याया विक्षिप्तविस्तृतदुरवगाहतयाऽलसप्राणानां मन्दमतीनामनुग्राह्यतया विक्षिप्ता च संक्षिप्तसुबोधा च श्रीरामपूर्वतापिनीयोपनिषदो व्याख्येयं सद्भ्यावतां हृदयङ्गमाऽऽरभ्यते। अत्र चोत्तमाधिकारिणां सगुणोपासनामन्तरेणैव निर्गुणस्य प्रतिपत्तुं शक्यत्वेऽपि मन्दाधिकारि-

भिस्तामन्तरेणैव प्रतिपत्तुमशक्यत्वात् 'ब्रह्मणो रूपकल्पने'त्या- दिना सगुणोपासनां व्रदिष्यंस्तया प्राप्तव्यं निर्गुणं रामनाम निरुक्तिव्याजेन षड्भिः श्लोकरूपाभिः कण्डिकाभिर्निरूपयति– चिन्मय इत्यादिना ।

ॐ चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ ॥
रघोः कुलेऽखिलं राति राजते यो महीस्थितः ॥ १ ॥
स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः ॥
राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवा ॥ २ ॥

ननु 'रमन्ते योगिन' इत्यस्यामेव कण्डिकायां निर्गुणमुप- लभ्यते, नतु प्राचीनासु कण्डिकासु । तासु च 'जाते दशरथ' इत्यादिना सगुणस्यैव प्रतीतेः । मैवम्, सगुणनिर्गुणयोः प्रधा- नभूतस्य निर्गुणस्यैव निरूपणौपयिकत्वेन सगुणस्य प्रत्याय- नात् । ननु तर्हि सगुणनिर्गुणे रूपे निरूपयतीति संहतिर्वक्त- व्या । न वक्तव्या, प्रधानाप्रधानयोः प्रधानस्यैवाऽऽदर्तव्यत्वात् । प्रधानं चेह निर्गुणमप्रधानं सगुणम् । ननु तर्ह्यप्रधानत्वादेव सगुणं न निरूपणीयम् । मैवम्, प्रधाननिरूपणार्थत्वेनाऽप्रधान- निरूपणेऽपि दोषाभावात् । यदाहुराचार्याः—

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।

इति । चिन्मये–चिद्घने । अत्र च प्राचुर्यार्थे मयट् । नतु विकारार्थे, चितेर्निर्विकारत्वात् । नच निर्विकारत्वमप्रमाण- कम् । 'न जायते म्रियते' इत्यादिश्रुतेरेवात्र प्रमाणत्वात् । स्वार्थे

प्रकाशः पश्चात्प्रकाश इति सम्भवति। उच्यते-नित्यप्रकाशमपि ब्रह्म अनाद्यनिर्वाच्याऽविद्ययाऽघटमानघटनपटीयस्या अप्रकाशमिव सम्पाद्यते। विद्यया तु तस्यामपनोदितायामाविर्भूतमिव भवति। ततो नानुपपत्तिः।

भक्तानुजिघृक्षया भगवता जन्म स्वीकृतमित्युक्तं, तदयुक्तम्। विकृत्यसहत्वात्। तथाहि-प्रागसतः सत्तासमवायः, कारणसमवायो वा जन्म? नाद्यः, नित्यसतः प्रागसत् इत्यंशभावेन(?) तद्विशिष्टजन्मानुपपत्तेः। नान्त्यः, निष्कारणस्य कारणसमवायायोगात्। किंच कारणसमवायः-कारणमात्रसमवायो वा, समवायिकारणसमवायो वा? नाद्यः, घटादीनां जन्माभावप्रसङ्गात्। नहि तेषां निमित्तकारणे कुलालादौ असमवायिकारणेऽवयवसंयोगे च दृष्ट इष्टो वा समवायः। न द्वितीयः, कारणमात्रविरहिणः समवायिकारणसमवायवाचोयुक्तेरवकाशाभावात्। प्रध्वंसजन्मन्यव्याप्तेश्च। उच्यते-देहसम्बन्ध एव जन्म। भगवतश्च लोकानुजिघृक्षया देहसम्बन्धः श्रुतिस्मृतिपुराणेतिहासप्रसिद्धः। ननु तर्ह्यङ्कुरादीनां देहसम्बन्धविरहिणां अजन्मतैव प्रसज्येत। स्यादेवं, यदि जन्ममात्रस्यैतल्लक्षणं स्यात्। नत्वेवं, किंतर्ह्यात्मजन्मनएव। आत्मनो घटादिवत्स्वरूपतो जन्मरहितस्यापि देहसङ्गतिलक्षणजन्माङ्गीकारेऽप्यनुपपत्त्यभावात्। तदुक्तम् अक्षचरणोपजीविभिः-'उत्पत्तिर्देहसङ्गति'रिति।

नन्वयोनिजव्यतिरिक्तदेहसङ्गतेरेवेयं जनकापेक्षा। तस्माज्जनको वक्तव्य इत्यतस्तमाह-दशरथे इति। 'दशभी रथै-

रेक एव युध्यतीति' दशरथस्तस्मिन् । ननु रामस्य कौशल्या-दशरथोभयजन्यत्वे सति केवलदशरथजन्यत्वाभिधाने युवनाश्वस्य मान्धातृजन्माभिधानवत्कारणं न पश्यामः । मात्रपेक्षया पितुः प्राधान्यमेव कारणमिति चेत्, 'एभ्यो माता गरीयसीति' पित्रादिभ्यो मातुरेव प्राधान्यस्मरणात् । सत्यम्, तथापि मात्रवयवापेक्षया भूयसामेव पित्रवयवानां पुत्रे सङ्क्रमादिह पितृमात्रसङ्कीर्तनम् । तदाह परमर्षिः—

'पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः'

इति । किंच श्रुतिरपि पितुः प्राधान्यमाह–'आत्मा वै पुत्रनामासीति' । नचायमात्मशब्दो मातापित्रोरुभयोरपि स्वरूपस्य पुत्रनामकत्वं दर्शयतीति वाच्यम्, श्रुतिव्याख्यानरूपया स्मृत्याऽपि पितृरूपस्यैव पुत्रनामकत्वप्रतिपादनात् ।

'पितैव पुत्ररूपेण जायते श्रुतिवाग् यतः'

इति हि स्मृतिः । अयमेवार्थः पाद्मेऽपि दृश्यते—

द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ॥

इति । ननु तर्हि 'एभ्यो माता गरीयसी' इत्येतदनवकाशं स्यात् । न स्यात्, मातुर्गर्भधारणादिक्लेशादिसहिष्णुत्वाभिप्रायेण प्राधान्यव्यपदेशोपपत्तिरिति । मनुष्यान्तरवदेव मनुष्यावतारस्य श्रीरामचन्द्रस्यापि प्रसक्तं परमार्तिपराकर्तृत्वाभावं वारयति–हरावितिति । 'परमार्तिं हरतीति' हरिस्तस्मिन् । 'भिद्यत' इत्यादिश्रुतिरस्मिन्नर्थेऽनुसन्धेया ।

तथाच श्रीमद्भागवतेऽपि—

लोकत्रयस्य महतीमहरद्य आर्तिं
स्वायम्भुवेन मनुना हरिरित्यनूक्तः।

इति। वस्तुतोऽपितृकस्य पितरमिव परमार्थतः कुलरहितस्यापि कुलं निर्दिशति-रघोः कुल इति। एवं जन्मकुलरहितस्यापि कुलजन्मनी आविद्यके अनया श्रुत्याऽभिहिते। स्मृतिरप्याह—

चैत्रमासे नवम्यां तु शुक्लपक्षे रघूत्तमः।
प्रादुरासीत् पुरा ब्रह्मन्! परं ब्रह्मैव केवलम्॥

इति। 'रघोः कुले दशरथे चिन्मयेऽस्मिन् महाविष्णौ हरौ जाते सति विद्वद्भिः आत्मतत्त्वज्ञैर्लोकेषु स राम इति प्रकटीकृत' इति योजना। यो-हरिः राति-ददाति अभीष्टमनभीष्टं च स्वकर्मानुसारेण, महीस्थितः सन् राजते महीस्थः सन्निति वा। एतेन रामनाम्नो द्वे निरुक्ती ज्ञातव्ये। एका-रातीत्यत्रत्ये राक्षरे, महीस्थित इत्यत्रत्ये मकारे च योजिते सति रामो भवतीति। अपरा-राजतेर्धातो राक्षरे महीशब्दगतमकारे च योजिते सति भवतीति। पदद्वयगतैकाक्षरग्रहणेन पदद्वयप्रतिपाद्योऽर्थः कथं प्रतिपत्तव्य इति चेत्, 'अप्यक्षरसामान्यान्निर्ब्रूया'-दिति यास्कवचनादिति ब्रूमः। यद्वा महीपदगतमकारासंस्पर्शेन रातीति राम इत्येव निर्वक्तव्यम्। तर्हि राम इत्यत्रत्यो मकारो व्यर्थः स्यादिति चेन्न, मकाराभावे कर्तृत्वस्य लाभाभावात्। कर्तरि ह्यौणादिको मकारप्रत्ययो विहितोऽस्ति। अथवा

'रा दीप्तौ' इति धातोः क्विपि 'रा' इत्येव निष्पद्यते । मः शिवः चन्द्रो वेधाः । 'मः शिवश्चन्द्रमा वेधा' इत्यभिधानात् । राश्चासौ मश्चेति रामः । शिवाद्यात्मकत्वं च सर्वात्मकत्वादस्योपपद्यते ।

विधान्तरेण रामनाम निर्वक्ति—राक्षसा इति । 'येन हेतुना राक्षसाः स्वोद्रेकतो मरणं यान्ति स राम' इत्यन्वयः । राक्षसा—रावणादयः स्वोद्रेकतः—स्वस्य शक्राद्यतिक्रमहेतुभूतादुद्रेकत आधिक्यात् । नहि भगवानुद्रेकमात्रात्तान् मारितवान्, अपितु शक्राद्यतिक्रमकरात्तस्मात् । 'रा' इत्यनेन राक्षसा लक्ष्यन्ते, 'म' इत्यनेन च मरणं यान्तीति । एकदेशेन समुदायलक्षणया बहुलमुपलम्भात् । अथवा स्वशब्देन भगवन्तं परामृश्य तस्योद्रेकतः सर्वातिशयत्वेन राक्षसा म्रियन्ते इति व्याख्येयम् । नच भगवत उद्रेकोऽप्रामाणिकः । 'अत्यतिष्ठद्दशाङ्गुल'मिति श्रुतेस्तत्र प्रमाणत्वात् ॥ १–२ ॥

निरुक्त्यन्तरमाह—रामनामेति ।

रामनाम भुवि ख्यातमभिरामेण वा पुनः ॥
राक्षसान् मर्त्यरूपेण राहुर्मनसिजं यथा ॥ ३ ॥
प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृताम् ॥
धर्ममार्गं चरित्रेण ज्ञानमार्गं च नामतः ॥ ४ ॥
तस्य ध्यानेन वैराग्यमैश्वर्यं यस्य पूजनात् ॥
तथा रामस्य रामाख्या भुवि स्यादथ तत्त्वतः ॥ ५ ॥

अभिरामेण–सुन्दरेण वपुषा तस्य रामनाम भुवि–भूशब्दोपलक्षितलोकत्रये ख्यातम्। अत एवपूर्वमप्युक्तं–लोकेष्विति। इममेवार्थं हृदि निधाय कालिदासोऽपि कविः रचयति स्म—

राम इत्यभिरामेण वपुषा तस्य चोदितः।
नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥

इति। प्रकारान्तरेण रामाख्यां निर्वक्ति–'राक्षसा'नित्यादिना 'भुवि स्या'दित्यन्तेन। अयमत्र योजनाप्रकारः–राहुः पर्वसन्धौ मनासिजं यथा प्रभाहीनं करोति, तथा राक्षसान् रावणादीन् मर्त्यरूपेण मनुष्यात्मना प्रभाहीनान् कृत्वा राज्यार्हाणां महीभृतां सूर्यसोमवंश्यानां राज्ञां चरित्रादिभिश्चतुर्भिर्धर्ममार्गादिचतुष्टयं राति भगवानिति हेतोः श्रीराघवस्य भुवि रामाख्या स्यादिति। मनसिजश्चन्द्रः। 'चन्द्रमा मनसो जात' इति श्रुतेः। राक्षसैर्हि सूर्यसोमवंश्यानां राज्ञां राज्यापहारेण धर्मज्ञानवैराग्यैश्वर्यहीनता जाता। श्रीरामेण तु राक्षसान् हतवता राज्ञां स्वस्वराज्ये च स्थितिं सम्पादितवता स्वचरित्रादिना धर्मादिकं सम्पादितम्। तदाह वाल्मीकिः—

'राजवंशान् शतगुणान् स्थापयिष्यति राघवः'

इति। पारमेश्वरेण चरित्रादिना कथं राज्ञां धर्मादिसिद्धिरिति चेदुच्यते—चरित्रं नाम सदाचारः, स च धर्महेतुः। तथाच राजानोऽपि श्रीरामस्य चरित्रमाकलयन्तस्तत्कृपयैव तादृशचारित्रभाजोऽभवन्। परमात्मपररामनाम्नोऽनवरतमर्थतोऽनु-

सन्धानेन ज्ञानभाजो(ज्ञान?)ध्यानेन निदिध्यासनाऽपरपर्यायेण परमानन्दमनुभवन्तो वैराग्यं—स्रक्चन्दनसुन्दरीप्रभृतिविषयपरिषदभिलाषविरहं च भजन्तः पूजनात्—गुर्वादिनमस्कारपुरःसरया विसर्जनान्तया वैष्णवागमोक्तया सपर्यया ऐश्वर्यं चाऽभजन् । अत्र च रामनाम्नस्तिस्रो निरुक्तयोऽनुसन्धेयाः । एका—'राहुर्मनसिजं यथे'ति दृष्टान्तवाक्यस्थपदद्वयादिभूतस्य 'रा' इत्यस्य 'म' इत्यस्य चाक्षरद्वयस्य संयोजनेन । अपरा तु—'राक्षसान् मर्त्यरूपेणे'ति दार्ष्टान्तिकवाक्यगतयो 'राम' इत्यक्षरयोः । तृतीया तु—'राज्यार्हाणां महीभृता'मिति वाक्यगतयोः ।

ननु 'प्रभाहीनान् कृत्वे'ति क्त्वाप्रत्ययो नोपपद्यते, क्रियान्तरानुपादानात् । नहि क्रियान्तरमनुपादाय क्त्वा शक्यप्रयोगः । तथा सति व्रजतीत्यनुपादाय भुक्त्वेत्यस्य केवलस्यैव प्रयोगापत्तेः । मैवम्, रातीत्यस्य क्रियान्तरस्योपादानात् । ननु तर्हि 'कृत्वा राती'ति वाक्यं पर्यवस्यति । एवमप्यनुपपत्तिः, प्रभाहीनान् कृत्वा रातीति 'रा'धात्वर्थदानक्रियाया अनिवर्तमानत्वात् । स हि सेतुबन्धादिना रावणादीन् प्रभाहीनान् कृत्वा प्राणैर्व्ययोजयत्, नतु राज्ञां धर्मादिकं समपादयत् । सत्यम्, तथापि न क्त्वानुपपत्तिः । नह्यानन्तर्यार्थे क्त्वा विहितः, किंतर्हि पौर्वापर्येण । नच पौर्वापर्यं क्रिययोरव्यवधानेनैव भवति, अपितु व्यवधानेन च । अत एव पौर्वापर्यमात्रे पाणिनिः क्त्वाप्रत्ययं सस्मार—'समानकर्तृकयोः पूर्वकाले क्त्वे'ति ।

धर्ममार्गं ज्ञानमार्गमित्यत्र मार्गशब्द उपायपरः । उभय-

त्रापि कर्मधारयः। धर्मश्चासौ मार्गश्च, ज्ञानं चासौ मार्गश्चेति। धर्मेण हि सुखमुपेयते, ज्ञानेन चाऽज्ञाननिवृत्तिः। तदाहुः श्रीशङ्करभगवत्पूज्यपादाः—'यतो ज्ञानमज्ञानस्य निवर्तक'मिति। धर्मस्य मार्गं ज्ञानस्य मार्गमिति न षष्ठीसमासो युक्तः। एतत्समानकक्षतयोपन्यस्तयोर्वैराग्यैश्वर्ययोरप्युपायोपदिदिक्षया मार्गशब्दप्रयोगापत्तेः। तथेति तद्वत्त्वोक्तेश्च। यथाऽखिलं राति तथा धर्मादिकमपीति द्वितीय'तथा'शब्दार्थः।

विधान्तरेणापि निर्वक्ति—अथ तत्त्वत इति। तस्य भावस्तत्त्वम्, तस्माद्रामत्वादित्यर्थः। 'रश्चासौ अश्चासौ मश्चे'ति रामः। र–इत्यग्निः, अ–इति विष्णुः, म–इति शिवः एतत्त्रयरूपत्वाद्रामः। अनेन रेफाऽकारमकारदेवतात्मकत्वमस्यैवोक्तं स्यात्। नहि सर्वात्मकस्य त्र्यात्मकत्वमयुक्तम्। अथवा उक्ता निरुक्तीरुपसंहरति—अथ तत्त्वत इति। यस्मादेवम्, अथ तत्त्वतो रामाख्या स्यात्। अव्ययानामनेकार्थत्वादथशब्दोऽत्र हेत्वर्थः। अयमाशयः–रेफः स्वप्रकाशं ब्रह्म वक्ति, 'रादीप्ता'विरस्य धातोराश्रयणात्। मकारो माया। तथाच मायावच्छिन्नस्वप्रकाशं ब्रह्म रामपदार्थः। तदेव जगत्कारणम्। अनवच्छिन्नस्य कारणत्वानुपपत्तेः। जगत्कारणत्वादेव च जगदात्मकं ब्रह्म, कार्यकारणयोर्भेदाभावात्। अत एव 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिः।

ननु सर्वं ब्रह्मेति सर्वमनूद्य ब्रह्मात्मताविधिः, अथवा ब्र-

ह्माऽनूद्य सर्वात्मताविधिः ? नाद्यः, मिथ्यात्वेनाऽभिमतस्य सर्वस्य ब्रह्मात्मतायाममिथ्यात्वापत्तेः । नहि ब्रह्म मिथ्या । न द्वितीयः, ब्रह्मणो मिथ्यात्वापत्तेः । नहि मिथ्याभूतात्सर्वस्मादभिन्नममिथ्या भवितुमर्हति ।

अत्रोच्यते—सर्वमनूद्य तस्य ब्रह्मात्मता विधीयते । नच ब्रह्मात्मतायां सर्वस्य सत्यत्वापत्तिर्दोषाय । सर्वस्यापि ब्रह्मात्मना सत्यत्वस्येष्टत्वात् । तर्हि 'प्रपञ्चो मिथ्ये'ति वाचोयुक्तिरयुक्ता स्यादिति चेन्न, स्वरूपतो मिथ्यात्वस्य ब्रह्मरूपेण सत्यभूतत्वस्याऽप्यप्रत्यूहत्वात् । नहि स्वरूपेण मिथ्याभूतमपि रजतं शुक्तिरूपेणापि मिथ्या भवति । ननु तर्हि 'सुवर्णं कुण्डल'-मित्यत्रापि केनचिद्रूपेण सत्यत्वं केनचिद्रूपेण मिथ्यात्व*माप-द्येतेति चेन्नैवम्, वैषम्यात् । तत्र हि सुवर्णकुण्डलांशयोरन्यतरस्यापि बाधाभावाद्विनैव बाधं सामानाधिकरण्यप्र*योगात् । सर्वं ब्रह्मेत्यत्र च सर्वस्य स्वरूपतो बाध्यतया बाधे सामानाधिकरण्यप्रयोगाऽनुपपत्तिः । चोरः स्थाणुरिति वत् । यद्वा 'अथ तत्त्वत' इति 'रमन्त' इत्यग्रिमनामनिरुक्त्या सम्बध्यते ॥३–८॥

पूर्वं सगुणपरतया रामनाम निरुच्य सगुणोपासनोपेयनिर्गुणब्रह्मपरतया निर्वक्ति–रमन्त इत्यादिना । अथवा शब्दार्थौ द्विविधः, वाच्यो लक्ष्यश्चेति । तत्र वाच्यपरत्वेन रामनाम निरुच्य लक्ष्यपरत्वेनापि निर्वक्ति–रमन्त इत्यादिना ।

---

* चिन्हान्तर्गतः पाठस्त्रुटित आसीदादर्शपुस्तके । उत्तरतापिन्यां प्रसङ्गतः समागतादेतस्माद्विषयादिह सङ्गृहीतः ।

रमन्ते योगिनोऽनन्ते नित्यानन्दचिदात्मनि ॥
इति रामपदेनासौ परं ब्रह्माऽभिधीयते ॥ ६ ॥

इति—अनेन प्रकारेण यन्निरुक्तं रामपदं, तेनाऽसौ—दाशरथिः परं ब्रह्म-परमात्मैवाभिधीयते । इतिशब्दपरामृष्टं निरुक्तिप्रकारं दर्शयति—रमन्त इति । योगः—चित्तवृत्ते-र्बाह्यविषयेभ्यो निरोधः । 'योगश्चित्तवृत्तिनिरोध' इति सूत्रयामास भगवान् पतञ्जलिः । 'स एषामस्ती'ति योगिनः रमन्ते—क्रीडन्ति, तत्पराः सन्तो हृष्यन्तीत्यर्थः । रति र्नाम इष्टार्थसंयोगजा क्रीडेत्याहुराचार्याः । कुत्र, अन-न्ते—अन्तः परिच्छेदस्तद्रहिते । नह्यस्य देशतो दीपप्रभाया इव परिच्छेदः, सर्वत्र सत्त्वात् । नापि कालतः, विद्युत इव सदा स-त्त्वात् । नापि वस्तुतः, स्थले जले वा तदतिरेकेण कस्यचिदप्य-भावादित्यवोचाम । अथ मतम्, सर्वस्यापि तदतिरेकेणाऽसत्त्वे योगिनोऽपि कथं स्युः । नहि ते सर्वस्मादतिरिक्ताः । अतिरे-के वा सिद्धं नः समीहितम् । अस्माभिर्हि रमणक्रियायां कर्तृ-विरहं प्रतिपादयितुमनन्तपदार्थपर्यालोचनातो योगिविरह उप-न्यस्यते । स च असत्सर्वान्तर्गतत्वहेतुकः । अथ योगिविरहाभा-वाय असत्सर्वान्तर्गतत्वं यदि नेष्यते, तर्ह्यनन्तर्गतत्वं ब्रह्मत्वे वा पर्यवस्येत्तुच्छत्वे वा । प्रथमे—ब्रह्मात्मनां योगिनां ब्रह्मणि रम-णानुपपत्तिः । नहि स्वयमेव स्वास्मिन् रमते, रमकरमणीय-भावस्य भेदगर्भत्वात् । चरमे—रमणं किमाश्रयं स्यादिति ।

अत्राऽभिदध्महे—किं सर्वस्यापि तदतिरेकेणाऽसत्त्वं पारमार्थिकमभिप्रेत्याऽयमाक्षेपः क्रियते व्यावहारिकं वा ? आद्यमङ्गीकुर्मः । नचाङ्गीकारे परमतमनिरस्तं स्यादिति वाच्यम् । सिद्धसाधनत्वेन निरासात्, तस्य चाऽसिद्धौ पर्यवसानात् । यदाहुः अक्षचरणोपजीविनः—

'आश्रयासिद्धता हेतोः सिद्धधर्मस्य साधने'

इति । न द्वितीयः, व्यावहारिकस्य निरासाऽयोगात् । नहि प्रपञ्चो वस्तुतोऽसन्नपि व्यवहारतोऽप्यसन्निति वक्तुं शक्यते । ननु ब्रह्मण उक्तमनन्तत्वमयुक्तम्, दृश्यत्वेन ब्रह्मणो विनाशानुमानादित्यत आह—नित्येति । नच नित्यत्वमप्रामाणिकम् । 'सर्वगतश्च नित्य' इति श्रुतेः । अत एव दृश्यत्वानुमानमतीतकालमसिद्धं च । दृग्विषयं हि दृश्यत्वम् । नच ब्रह्मणो दृग्विषयता, स्वप्रकाशस्य तदनुपपत्तेः । नच स्वयंप्रकाशत्वमसिद्धम्, 'अत्रायं पुरुषः स्वयंज्योति'रिति श्रुतेः ।

ननु न ब्रह्मणि रमणं पुरुषार्थः, सुखाप्तिरूपत्वस्य दुःखनिवृत्तिरूपत्वस्य चाभावात् । नहि ब्रह्म सुखरूपम्, सुखस्य गुणत्वाद्ब्रह्मणश्च द्रव्यत्वात् । नच द्रव्यगुणयोरभेदः सम्भवति, विरुद्धधर्माक्रान्तत्वात् । अन्यथा मिहिरतिमिरयोरप्यभेदापत्तिः । नापि दुःखनिवृत्तिरूपम्, भावरूपस्य ब्रह्मणोऽभावरूपत्वाऽनुपपत्तेः । अन्यथा भावोऽभावश्चेति पदार्थद्वैविध्योपन्यासस्योन्मत्तप्रलपितत्वापत्तेरित्यत आह—आनन्देति । अयमाशयः—ब्रह्मण आनन्दत्वेन तस्मिन् रमणमानन्दावाप्तिरू-

पतया पुरुषार्थ एव । स्यादेतदेवम्, यदि ब्रह्मण आनन्दरूपता स्यात् । नच ब्रह्मण आनन्दात्मकताऽस्ति, प्रमाणाभावात् । मैवम्, 'आनन्दं ब्रह्मणो रूप'मिति श्रुतेरेव प्रमाणत्वात् । ननु आनन्दोऽस्तीत्यानन्दः । 'अर्शआदिभ्यो'ऽजिति मत्वर्थीयाऽच्-प्रत्ययान्तो ह्ययमानन्दशब्दः । अन्यथा नियतपुंल्लिङ्गस्याऽऽनन्दशब्दस्य 'आनन्द' मिति नपुंसकत्वेन प्रयोगानुपपत्तेः । तत्कथमानन्दरूपं ब्रह्मोच्यते । ननु बहुलग्रहणाल्लिङ्गव्यत्ययेन 'आनन्द'मिति नपुंसकतोपपत्स्यते । मैवम्, सत्यां गत्यामीदृशपरिहारोपन्यासानवकाशात् ।

अत्रोच्यते-'आनन्दो ब्रह्मे'त्यादिश्रूयमाणबहुतरश्रुत्यनुरोधेनाऽऽनन्दमिति नपुंसकतायां छान्दसत्वेनैवोपपादनीयत्वावश्यंभावात् । 'आत्मा आनन्दरूपः परप्रेमास्पदत्वा'दित्यनुमानाच्च । ननु यथा ज्ञानमात्मगुणस्तथाऽऽनन्दोऽपि स्यात्, अन्यथा ज्ञानमपि नात्मगुणः स्यादित्यत आह—चिदिति । नहि चिदपरपर्यायं ज्ञानमप्यस्माभिरात्मगुणत्वेनेष्यते, येनैव दृष्टान्तावष्टम्भेनाऽऽनन्दस्याप्यात्मगुणत्वमाचष्टे भवान् । तथाऽऽचक्षाणश्च 'असिद्धमसिद्धेन साधयतो महानैयायिकत्व'मिति वचनस्य विषयत्वान्न (१)निवर्तते । नच ज्ञानस्यात्मरूपतायां मानाभावः, 'सत्यं ज्ञान'मिति श्रुतेर्मानत्वात् । नचेयमुपचरितार्था श्रुतिः, मुख्यार्थे बाधाभावात् । अज्ञानात्मकत्वे वा आत्मनो जाड्यं प्रस-

---

( १ ) मूलपुस्तके 'वचनमविषयत्वान्न' इति पाठः ।

श्येत । तथाच जगदान्ध्यप्रसङ्ग इत्युक्तमेव । नहि जडेनात्मना जडः प्रपञ्चः शक्यप्रकाशनः । तथा सति पटो जडं घटं प्रकाशयेत् । अत एवात्मनो जडत्वाभावाय ज्ञानात्मकत्वमप्यागेनाऽप्येषितव्यम् । आत्मपदमन्ते श्रूयमाणं नित्यादिपदैः प्रत्येकमेभिः सम्बध्यते—नित्यात्मनि आनन्दात्मनीति । अत्रात्मशब्दः स्वरूपवचनः ।

ननु 'नित्यमानन्दधिद्ब्रह्मे'ति सामानाधिकरण्यप्रयोगेणैव नित्यादीनां ब्रह्मस्वरूपत्वोपपत्तावात्मशब्दो व्यर्थ इति चेन्न व्यर्थः । यदि हि वैयर्थ्यमभिधेयराहित्यम्, तन्न । स्वरूपार्थताया इदानीमेव निवेदितत्वात् । अहो ! महतीयं भवतो विस्मरणशीलता, यदिदानीमेव निवेदितमप्यर्थं नास्मार्षीत् । अथ प्रयोजनराहित्यम्, एतदपि न । सामानाधिकरण्यप्राप्तस्यैव स्पष्टीकरणार्थत्वात् । अथवा जीवब्रह्मणोः स्पष्ट एव भेदः । संसारित्वाऽसंसारित्वादिविरुद्धधर्माक्रान्तत्वादित्यत आह— आत्मनीति । आत्मभूते नतु जीवाद्यतिरिक्ते । व्यतिरेके 'तत्त्वमस्या'दिवचननिचयव्याकोपापत्तेः नच तस्यान्यपरत्वम्, उपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्यलिङ्गत्वात् । विरुद्धधर्मसंसर्गलक्षणो हेतुरनैकान्तिकः । विम्बप्रतिबिम्बयोरस्य सत्त्वेऽपि भेदलक्षणस्य साध्यस्याभावात् । ननु तयोरपि भेदो दृश्यते । दृश्यताम् । तर्हि अनैकान्तिकत्वोद्भावनमुन्मत्तप्रलपितं स्यात् । न स्यात्, पारमार्थिकभेदाभावाभिप्रायेण तदुद्भावनात् । अथ विरुद्धधर्मसंसर्गेण जीवब्रह्मणोरपारमार्थिक एव भेदः सिषाधयिषि-

तस्तत्कथं सव्यभिचारतेति। मैवम्, सिद्धसाध्यतापत्तेः। अङ्गीकुर्म एवं हि वयमपि। तयोरपारमार्थिकभेदमेवमङ्गीकुर्वता पारमार्थिकभेदस्य स्वसिद्धान्तस्य परित्यजनात्। क्वचित् 'सत्यानन्दे'त्यपि पाठः। तत्र 'सत्यमबाध्यं बाध्यं मिथ्ये'ति आचार्यैः सत्यशब्दार्थोपपादनादिति।

नन्वेते सत्यादयः शब्दा एकमर्थमाभिदधत्यनेकं वा? न प्रथमः, एतेषां पर्यायतापत्तेः। एकार्थाभिधायकतैव हि पर्यायता। पर्यायत्वे सहप्रयोगोऽनुपपन्नः स्यात्। यदाहुः—

पर्यायाणां प्रयोगो हि यौगपद्यं तु नेष्यते'

इति। इह च सहप्रयोगः स्फुटमेव दृश्यते—'नित्यानन्दचिदात्मनी'ति। ननु केह सहप्रयोगः,'नित्यादिपदानां क्रमेणैवोच्चारणात्। मैवम्, नहि युगपदुच्चारणं सहप्रयोगः। अपितु तर्हि एकस्यैवार्थस्य प्रतिपत्त्यर्थं तद्वाचकानेकशब्दप्रयोगः। स चानुपपन्नः, एकेनैव कृतत्वादितरानर्थक्यादिति। न द्वितीयः, विकल्पासहत्वात्। किं परस्परमसम्बद्धाननेकार्थानभिदध्युः सम्बद्धान् वा? नाद्यः, दशदाडिमादिपदानामिव वाक्यत्वेनाऽनुपादेयत्वापत्तेः। नान्त्यः, सम्बद्धा अनेकेऽर्था एकमेव विशिष्टमनेकं वा? नाद्यः, नित्यादिपदवेदनीयब्रह्मणो वैशिष्ट्यापत्तेः। नच तस्य तदिष्यते, अखण्डैकरसत्वात्। न द्वितीयः, वाक्यभेदापत्तेः। अर्थैकत्वेन ह्येकवाक्यता भवति। तदुक्तं परमर्षिणा—'अर्थैकत्वादेकं वाक्य'मिति।

अत्र ब्रूमः—सत्यादिपदानामनेकार्थत्वं यन्निराकार्षीः, त-

दस्मदभिमतमेवाऽकार्षीः । यत्त्वेकार्थत्वपक्षं प्रत्याक्षेपस्तन्न सहामहे । पर्यायत्वापत्तेरिति चेन्न । किमेकार्थत्वमात्रेण पर्यायत्वमापादयसि, अभिधेयार्थैक्येन वा ? नाद्यः, 'प्रकृष्टप्रकाशश्चन्द्र' इत्यत्र प्रकृष्टप्रकाशपदयोः प्रकर्षप्रकाशत्वलक्ष्यवाच्यार्थद्वारा लक्ष्यभूतचन्द्रप्रातिपदिकरूपैकार्थपरयोरपि पर्यायत्वानुपलम्भात् । न द्वितीयः, अभिधेयानामर्थानामैक्यं च भवतोऽपसिद्धान्तः(१) । तयोरपारमार्थिकभेदभिन्नत्वात् । तर्ह्यनेकार्थत्वपक्षोक्तदोषापत्तिरिति चेन्न, अभिधेयाऽनेकार्थद्वारैकाखण्डैकरसब्रह्मपरत्वे तदनुपपत्तेः । ननु किमिदमर्थस्याखण्डत्वम् ? निरवयवत्वमिति चेत्तर्हि 'शब्दगुणविशिष्टमाकाश'मित्यादेरपि वाक्यस्याखण्डार्थत्वप्रसङ्गः । नित्यत्वमिति चेत्तर्हि 'परमाणवः सत्यात्मानः सन्ती'त्याद्यानामपि वाक्यानां तत्त्वप्रसङ्गः । निर्विभागार्थत्वमिति चेत्, किमिह विभागो गुणविशेषो भेदो वा ? नाद्यः, 'रूपरसगन्धस्पर्शा गुण' इत्यादेरपि वाक्यस्य निर्विभागार्थत्वेनाखण्डार्थत्वापत्तेः । नहि रूपादीनां विभागोऽस्ति, विभागस्य गुणत्वेन द्रव्यमात्रनिष्ठस्य गुणाधिकरणरूपादिषु समवायायोगात् । नापि द्वितीयः, 'पदार्थानां भेदोऽस्ती'त्यादेरपि वाक्यस्याखण्डार्थत्वापत्तेः । नहि भेदस्य भेदोऽस्ति, अनवस्थानात् । नापि अविशिष्टार्थत्वं ब्रह्मणः, सत्त्वादिविशिष्टस्याऽविशिष्टत्वानुपपत्तेः । तस्मात् सत्यादिपदानां ब्रह्मणि प्र-

(१) अभिधेयानामर्थानामधिकश्च भयतोयासिद्धान्तः—इत्यादर्शपुस्तके ।

युज्यमानानामखण्डार्थत्वमिति वचो रिक्तमेवेति ।

अत्राऽभिधीयते—अपर्यायानेकशब्दप्रकाशितमविशिष्टमित्यखण्डलक्षणमभिप्रेतमस्माकम् । तच्च ब्रह्मणि वर्तते । तद्धि अपर्यायैरेव सत्यादिपदैः प्रकाश्यते । नच विशिष्यते केनचिद्धर्मेण, तस्य निर्धर्मकत्वात् । अत एवाहुः—

अविशिष्टमपर्यायानेकशब्दप्रकाशितम् ।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥

इति । 'तत्त्वमस्या'देः कथमखण्डार्थत्वमिति चेत् , उपाधिभेदभिन्नस्यार्थस्यैकत्वप्रतिपादकत्वादिति ब्रूमः । एतदप्यभिहितमाचार्यैः—

उपाधिभेदभिन्नोऽर्थो येनैकः प्रतिपाद्यते ।
तदपि स्यादखण्डार्थं महत्त्वं कुम्भकं यथा ॥

इति । ननु नित्यत्वादिधर्मविशिष्टनित्यादिरूपधर्मिप्रवर्तमानता (१) नित्यादिपदार्थः, तत्कथं नित्यादिपदानामखण्डपरत्वमिति । मैवम्, अन्यत्र धर्मविशिष्टे धर्मिणि प्रवर्तमानानां पदानामखण्डपरत्वाभावेऽपि ब्रह्मणि प्रवर्तमानानां ब्रह्मण्यखण्डपरत्वाभ्युपगमस्यावश्यकत्वात् । तत्कस्य हेतोः, ब्रह्मणो निर्धर्मकत्वात् । अथ सधर्मकमेव ब्रह्म किं न स्यात् , अद्वैतभङ्गप्रसङ्गादिति ब्रूमः । नहि धर्मो धर्मी चेति द्वैते जाग्रति अद्वैतमुल्लसितुं शक्नोति । नचाऽद्वैतानुल्लासे किं नश्छिन्नमि·

(१) नित्यत्वादीनिधर्मविशिष्टं नित्यादिरूपं धर्मिप्रवर्तमानानां— इति मूलपुस्तके ।

ति वाच्यम् , तत्प्रतिपादकश्रुतीनां प्रामाण्यस्य छिन्नत्वात् । नन्वेवमिष्टमेव नश्चेष्टितं स्यात् । नहि वयमद्वैतश्रुतीनां प्रामाण्यमभ्युपगच्छमामः । कथं हि द्वैतवादिनस्तासां प्रामाण्यमभ्युपगच्छेयुरिति । सत्यमेवम् । स्वाङ्गीकृतद्वैतानुरोधादेव किमद्वैतश्रुतीनां प्रामाण्यं भवता नाभ्युपेयम् ? आहोस्विदमूषामद्वैते तात्पर्याभावात् ? नाद्यः, काचादिदोषदूषितलोचनेनापि स्वप्रतीतरजतभुजगाद्यनुरोधेन 'नेदं रजतं नायं भुजग' इत्यादिप्रत्ययानामपि प्रामाण्यानभ्युपगमापातात् । तत्किमिदानीं द्वैतप्रतीती रजतादिप्रतीतिवद्विभ्रमः ? कः सन्देहः । बाधविधुराया द्वैतप्रतीतेः कथं विभ्रमत्वमिति चेन्मैवम् , बाधविधुरत्वरहेतोरासिद्धत्वात् । सन्ति हि भेदप्रतीतेरपरोक्षत्वादियौक्तिकबाधाः, ते चेह विस्तरभिया नोपन्यस्यन्ते । नापि द्वितीयः, अद्वैते तात्पर्याभावस्याऽसिद्धत्वात् । नहि तात्पर्यलिङ्गेषु सत्स्वपि तात्पर्यविरहः शक्याभिधानः । नच तात्पर्यलिङ्गानि न सन्ति, उपक्रमोपसंहारैकरूप्यादीनां षण्णामपि तेषां श्रुतिशिखरवचननिचयेषूपलम्भात् । अपिच ब्रह्मण्यभ्युपगम्यमाना धर्मास्ततो भिन्ना अभिन्ना भिन्नाभिन्ना वा ? आद्ये सम्बन्धोऽस्ति न वा ? न चेत् , न ते ब्रह्मधर्माः स्युः । असम्बन्धेऽपि तद्धर्मत्वे–सर्वः सर्वधर्मः स्यात् । अस्तिचेत्, तत्र वक्तव्यम्–सम्बन्धस्य सम्बन्धिभ्यां सह सम्बन्धोऽस्ति न वा ? न चेत् , कथं सम्बन्धिता स्यात् । अस्ति चेत्, तस्यापि सम्बन्धान्तराभावे तदीयत्वानुपपत्तौ सम्बन्धान्तरस्याऽवश्याभ्युपगम्यत्वे-

ऽनवस्थापातात् । द्वितीये–धर्म्यैव न धर्म इत्यस्मदभिमतसिद्धिः । इदमेवाभिप्रेत्य प्रथमभाष्यव्याख्यानावसरे पञ्चपादिकाचार्यैरभिहितम्—'आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा' इत्यादिना । तृतीयस्तु विरोधग्रस्ततयाऽनुपपन्न एव । नहि भेदोऽभेदश्च सहावस्थातुं शक्नुतः । तस्मान्निर्धर्मकमेव ब्रह्मेति तत्र प्रवर्तमानानामुक्तन्यायेनाखण्डार्थत्वमेष्टव्यम् ॥ ६ ॥

एवं रामपदनिरुक्तिव्याजेन निर्गुणब्रह्म 'चिन्मय' इत्या'द्यभिधीयत' इत्यन्तेन प्रतिपाद्य तदेव सगुणत्वेन कल्पितमित्याह–'चिन्मयस्ये'त्यादिभिश्चतसृभिः कण्डिकाभिः ।

चिन्मयस्याद्वितीयस्य निष्कलस्याऽशरीरिणः ॥
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥ ७ ॥

चिन्मयस्य—चिदेकरसस्य अद्वितीयस्य—सजातीयविजातीयस्वगतभेदशून्यस्य निष्कलस्य—वस्तुतो मायारहितस्य । दशरथादाविर्भूतत्वेन शरीरित्वशङ्कां वारयति—अशरीरिणः—मायाविरहिणोऽहङ्काराभावान्मायाकार्यदेहाऽनाकलितस्यैवम्भूतस्य श्रीरामशब्दाभिधेयस्य परस्य वस्तुनो रूपकल्पना—चतुर्भुजादिवक्ष्यमाणरूपकल्पना क्रियते ।

नन्वियं कल्पना नावकल्पते फलवैकल्यादत आह–उपासकानामिति । ननु किमिदं कार्यम् । फलमिति ब्रूमः । कथं कार्यपदं फले प्रवर्तते । कृतिविषयत्वात् । ननु तर्हि भारवहनादिकमपि फलं स्यात् , नहि तस्य कृत्याविषयत्वमस्ति । अस्तु

भारवहनादेरपि कृतिविषयत्वम् , नैतावतापि तस्य फलत्वापत्तिः । कृत्युद्देश्यत्वरूपस्य विषयत्वस्याऽभावात् । कृत्युद्देश्यत्वमेव च फलत्वमिति नानुपपत्तिः । ननूपासका इह सगुणोपासका उत निर्गुणोपासकाः ? प्रथमे–तेषां कस्मै फलाय रूपकल्पना ? किं सगुणस्य प्राप्तये निर्गुणस्य वा ? आद्ये–(१) सगुणं पारमार्थिकमपारमार्थिकं वा ? प्रथमेऽपि–तयोर्भेदः पारमार्थिकोऽस्ति न वा ? प्रथमेऽद्वैतभङ्गप्रसङ्गः । न द्वितीयः, सगुणत्वं निर्गुणत्वं चोभयं पारमार्थिकमङ्गीकृत्य सगुणनिर्गुणयोः पारमार्थिकभेदानङ्गीकारे विरोधापत्तेः । अथ अपारमार्थिकमेव सगुणं रूपमिति पक्षं श्रेयांसं मन्यसे, तथापि न तादृशरूपावाप्तिः फलकोटौ निवेष्टुं शक्नोति । अपारमार्थिकरूपावाप्तेः केनचिदनभिलष्यमाणत्वात् । नापि निर्गुणत्वप्राप्तये रूपकल्पनेति पक्षः । सगुणोपासकानां निर्गुणप्राप्त्यनुपपत्तेः । नो खलु चित्राकारीर्याद्यनुष्ठायिनो ज्योतिष्टोमादिसाध्यस्वर्गाद्यवाप्तिः । अथोपासकशब्देन निर्गुणरूपनिष्ठा एव विवक्षितास्तर्हि तेषामपि फलायैव रूपं परस्य ब्रह्मणः कल्पनीयम् । तच्च फलं न पश्यामः । न तावत्सगुणावाप्तिः, तदर्थं तैरुपायाननुष्ठानात् । अननुष्ठितोपायानामभ्युपेयप्राप्तावतिप्रसङ्गात् । अस्तु वा यथा तथा, तथाप्युच्चाभिलाषिणां नीचावाप्तिः कथं नाम फलतामाकलयेत् ? अथ निर्गुणावाप्तिरेव फलमिति मन्यसे, न । तस्या गगनकुसुमायमानत्वात् । गगनकुसुमायमानत्वा-

---

(१) एतदग्रे 'निर्गुणमेव' इत्यधिकं मूलपुस्तके ।

भावेऽपि वा दुर्लभत्वात् । नहि दृढतरसंसारवासनावासितमनाः सौलभ्येनाकलयितुं (१)शक्नोति । नचाऽत्यन्तदुर्लभस्य फलत्वमुपपद्यते । महाराजेन भुज्यमानस्यापि राज्यस्य राज्यप्रापकाऽदृष्टविरहितानपि प्रति फलत्वापत्तेः । तस्मात् 'उपासकानां कार्यार्थ'मित्यनुपपन्नमेवेति ।

अत्रोच्यते—उपासकशब्देनेह न निर्गुणनिष्ठा अभिधीयते, किं तर्हि सगुणनिष्ठा । 'ब्रह्मणो रूपकल्पना' इत्युक्तेः । नह्युपासनाय कल्पितरूपोपासना निर्गुणनिष्ठा भवितुमर्हति । नच सगुणोपासनायाः फलाभावः, सगुणप्राप्तेः फलत्वात् । ननु सगुणमपारमार्थिकम्, अपारमार्थिकं च न फलं भवितुमर्हतीत्युक्तम् । सत्यम्, तथापि तस्य व्यावहारिकपारमार्थिकत्वाङ्गीकारेण फलत्वमुपपद्यत एव । नहि व्यवहारतः सत्यं स्वर्गादिकं न दर्शपूर्णमासादेः फलम् । ननु सांसारिकाणामनित्यमपि स्वर्गादिकमस्तु, मुमुक्षूणां नित्यनिरतिशयफलार्थिनां कथमीदृशसगुणप्राप्तिः फलमिति । भवेदेवम्, यदि सगुणप्राप्तिः परमं फलमिति ब्रूमः । किं तर्हि अवान्तरफलमिति वदामः । किं तर्हि परमफलम् ? नित्यनिरतिशयानन्दनिर्गुणावाप्तिः । नत्वस्याः सगुणोपासनासाध्यत्वमनुपपन्नम् । अन्तःकरणशुद्धिद्वारा तदुपपत्तेः । श्रूयते हि– 'तमेतं वेदानुवचनेन' इति । ननु तर्हि अन्तःकरणशुद्धिद्वाराऽन्यत्र विनियुक्तायाः सगुणोपासनाया निर्गुणप्राप्त्युपायता नोपपद्यते । नह्यन्यत्र विनियुक्तमन्यत्र शक्याविनियोगम् ।

(१) दृढतरं "" मनसां सौलभ्यमाकलयितुं-इत्यादर्शपुस्तके ।

मैवम्, संयोगपृथक्त्वेन तदुपपत्तेः । तथाचाऽऽह परमर्षिः—'एकस्य तूभयत्वे संयोगपृथक्त्व'मिति । ननु अभिलषितफलं नित्यं रूपकल्पना चाऽनित्या, तया तदवाप्तिः कथं फलम् । नहि गन्धर्वनगरराज्याभिषिक्तेन सुतेन सुखसम्पत्तिर्वन्ध्यायाः । न, ब्रह्मव्यतिरिक्तसत्यत्वाङ्गीकारे द्वैतापत्तिः । ननु द्वैतभीत्या प्रमात्रादिसत्यत्वमनङ्गीकुर्वतः शास्त्रानर्थक्यं दुर्वारमिति चेन्न, युक्तिभिरस्य चोद्यस्य परिहरणीयत्वात् । तथाहि—प्रमातर्यसति प्राप्तव्यस्य प्राप्तिः सति वा ? नाद्यः, प्राप्तुरभावे प्राप्तिक्रियाया एवानुपपत्तेः । नहि छेत्तुरभावे छिदिक्रिया सत्यपि च्छेत्तव्ये वृक्षादौ दृष्टचरी । अतः सति प्रमातरि प्राप्तव्यस्य प्राप्तिरिति वक्तव्यम् । तदा श्रुत्याचार्यादिरूपकल्पनाया अस्त्येव सत्यत्वम् । तत्तु प्रातीतिकं, व्यावहारिकं, पारमार्थिकं चेति त्रिविधम् । तत्र पारमार्थिकं नाम—सत्यसति वा प्रमातरि सर्वथा बाधराहित्यत्वम्, तद्ब्रह्मण एव । सति प्रमातर्यबाध्यत्वं व्यावहारिकम्, यथाऽऽकाशादेः । सति प्रमातरि बाध्यत्वं प्रातीतिकम्, यथा प्रतिबिम्बादौ । तदस्त्येव रूपकल्पनायाः । तस्यां चार्थक्रियाकारित्वमपि युक्तम् । भास्करप्रतिबिम्ब,तस्करपदान्वेषण,स्वप्नकामिन्यादीनां भास्करतस्करोपस्करादिप्राप्तिहेतुत्वात् ।

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने ॥

इति श्रुतेः । वन्ध्यासुतादेस्तुच्छत्वान्न दृष्टान्तता ।

तथाचोक्तं वार्तिककृद्भिः—

अक्षमा भवतः केयं साधकत्वप्रकल्पने ।

किं न पश्यसि संसारं तत्रैवाऽज्ञानकल्पितम् ॥

इति । तस्माद्रूपकल्पनयोपासकस्य श्रीरामाख्यस्य परब्रह्मणोऽवाप्तिः सुलभेत्यलमतिकुतर्केण ॥ ७ ॥

सामान्येनोक्ताया रूपकल्पनाया विशेषमन्तरेणापर्यवसानाद्विशेषे पर्यवसानमाह—रूपस्थानामिति ।

रूपस्थानां देवतानां पुंस्त्र्यङ्गास्त्रादिकल्पना ॥
द्विचत्वारिषडष्टाऽऽसां दश द्वादश षोडश ॥ ८ ॥
अष्टादशाऽमी कथिता हस्ताः शङ्खादिभिर्युताः ॥
सहस्रान्तास्तथा तासां वर्णवाहनकल्पना ॥ ९ ॥
शक्तिसेनाकल्पना च ब्रह्मण्येवं हि पञ्चधा ॥
कल्पितस्य शरीरस्य तस्य सेनादिकल्पना ॥१०॥

रूपमिह सगुणं हिरण्यगर्भादिशब्दितम् । 'ब्रह्मणो रूपकल्पने'ति कल्पनाविषयत्वेनोक्तस्य रूपस्य निर्गुणत्वानुपपत्तेः । अतो रूपकल्पनेत्युक्तम् । तस्यैव रूपस्य प्रत्यभिज्ञानात्सान्निध्याच्च 'रूपस्थानामि'त्यत्रापि ग्रहणमुचितम् । रूपे तिष्ठन्तीति रूपस्थास्तासां देवतानां यथारुचि विष्ण्वादीनां पुंस्त्र्यङ्गास्त्रादिकल्पना—पुमान् 'विष्णुः शिवो ब्रह्मे'त्यादिरूपेण स्त्री 'लक्ष्मीगौरी सरस्वती'त्यादिरूपेण अ-

ङ्गानि हृदयाद्यात्मना अस्त्राणि सुदर्शनाद्यात्मना आदिपदगृहीताऽऽवृतिदेवतात्मना च कल्पना स्यात् । किंच द्व्यादिसहस्रान्ता हस्ताः शङ्खादिभिरायुधैर्युता अमी आसां—कल्पितदेवतानां कथिता—उक्ताः श्रुत्यनुरोधेन कल्पविद्भिः । अत्र च 'रूपस्थाना'मित्यादि'सहस्रान्ता' इत्यन्तैका कल्पना, तथा—तेनैव प्रकारेण शुक्लादिवर्णकल्पना द्वितीया, गरुडादिवाहनकल्पना तृतीया, चतुर्थी विष्वक्सेनादिसेनाकल्पना, विमलादिशक्तिकल्पना पञ्चमी । एवं पञ्चविशिष्टां संख्यां वाचकशब्देनोपसंहरति— ब्रह्मणि—श्रीरामे एवम्—उक्तेन प्रकारेण । हिशब्दः प्रसिद्धिद्योतकः। पञ्चधा—पञ्चभिः प्रकारैः कल्पना भवतीत्यर्थः ।

अनेन विष्णुशिवादिसाधारणदेवताकल्पना दर्शिता । इदानीं प्रकृत्य श्रीरामाख्यस्यैव परस्य ब्रह्मण उपासनोपयोगिनीं कल्पनामनुसन्धत्ते—'कल्पितस्य शरीरस्य तस्य सेनादिकल्पने'त्यर्धेन । तस्य शरीरस्येति व्यधिकरणे षष्ठ्यौ । तस्य—श्रीरामस्य यत् शरीरं कल्पितं वक्ष्यमाणचतुर्भुजादिरूपेण, तस्य सेनादिकल्पना भवति । वर्णादिरादिशब्दार्थः । नचेयं कल्पना—निरर्थिका, उपासनार्थत्वादिति ब्रूमः ॥ ८–१० ॥

ननूपासनमिदं न रूपकल्पनामात्रेण सिध्यति, किन्तु मन्त्रानुष्ठानेन । अतो वक्ष्यमाणं राममन्त्रानुष्ठानं कर्तव्यं चेत्तर्हि ब्रह्मादिदेवतामन्त्रानुष्ठानमवज्ञातं स्यादत आह—ब्रह्मादीनामिति ।

ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादिसंज्ञकः ॥
जप्तव्यो मन्त्रिणा नैनं विना देवः प्रसीदति ॥११॥

अयमित्यनेन वक्ष्यमाणषडक्षरो मन्त्रराजः प्रतिसन्धीयते। ब्रह्मादीनां देवतानां श्रीरामाद्भेदाभावेन श्रीराममन्त्रो ब्रह्मादिवाचक एव। अतो राममन्त्रानुष्ठानेन ब्रह्मादिमन्त्रानुष्ठानमपि भवति, इति न भवति ब्रह्मादिमन्त्रानुष्ठानावज्ञेति भावः। मन्त्रराजस्य सर्वेभ्यो मन्त्रेभ्य उत्कर्षादि दर्शयिष्यन् विशिनष्टि अन्वर्थादिसंज्ञक इति। सर्वान् अर्थान्—आकाशादीन् वाच्यान् वाचकत्वेनाऽनुगतवती आदिः—श्रेष्ठा संज्ञा रामानामरूपा यस्मिन् स तथा। 'शेषाद्विभाषे-'ति बहुव्रीहौ कप्रत्ययः। अनेन ब्रह्मादिमात्रविषयत्वेन प्रापितमस्य मन्त्रस्य वाचकत्वसङ्कोचं सर्वार्थवाचकत्वोपन्यासेन वारयति। नन्वेवमस्तु मन्त्रराजो ब्रह्मादिवाचकः सर्ववस्तुवाचको वा, तथापि प्रवृत्तिनिवृत्त्यन्यतरानुपदेशाद्वाचकत्वप्रतिपादकवचनस्य न शास्त्रत्वं स्यात्। यदाहुः—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥

इति। तत्राह—जप्तव्य इति। लिङ्लोट्तव्यप्रत्यया हि विधायकाः। अतो 'जप्तव्य' इत्ययं तव्यप्रत्ययान्तो विधिरेव। अत एव तद्विधिप्रतिपिपादयिषयैवोपन्यस्तं वाचकत्वप्रतिपादकं वचनं पुरुषप्रवृत्तिपर्यवसायितया शास्त्रं भवतीति भावः। ननु 'जप्तव्य' इति न विधिः, विधित्वे प्रमाणाभावात्। तव्य-

प्रत्यय एव प्रमाणमिति चेन्न, तस्य व्यभिचारात् । कथमिति चेत्, 'विष्णुरुपांशु यष्टव्य' इत्यादीनां विधित्वे प्रामाण्यानभ्युपगमात् । कुतो न प्रामाण्यमभ्युपगम्यते इति चेत्, विष्ण्वादियागविधीनामभ्युपगमे वाक्यभेदापत्तेः । वाक्यैक्यासम्भवे वाक्यभेदो न दोषायेति चेत्—भवेदेवम्, यदि वाक्यैक्यासम्भवः स्यात् । नचेह वाक्यैक्यासम्भवः, वाक्यैक्यस्यावश्यकत्वात् । कुतोऽस्यावश्यकत्वमितिचेत्, उपक्रमोपसंहारैकरूप्यतात्पर्यलिङ्गैनैकवाक्यत्वप्रतीतेर्दुर्बाधत्वात् । 'जामि वा एतद्यज्ञस्ये'त्यत्र हि जामितादोषेणोपक्रमः अजामित्वायेति प्रतिसमाधीयमानो जामितादिदोषेणैवोपसंहारः । नन्वेवं 'यष्टव्य' इत्यादौ विधिविरहश्चेत्तव्यप्रत्ययस्य का गतिः ? विधिस्वरूपत्वमिति ब्रूमः । नन्वेवं 'जप्तव्य' इत्यत्रापि विधिविरहे विधिस्वरूपत्वमस्तु । नैवम्, विधित्वे बाधाभावाद्विधिविरहवाचोयुक्तेरनुपपत्तेः । तस्मात् श्रोतव्य इतिवत् जप्तव्य इत्यपि विधिरेव । नत्वनागतोत्पाद्यभावनाविषयो विधिः । स च न विषयभूतभावनानभ्युपगमे शक्याभ्युपगमः । विषयाभावे विषयिणआत्मलाभासम्भवात् । अतो विषयभूता भावना अवश्याभ्युपगन्तव्या । सा च 'किम् केन कथम्' इत्यंशत्रयवती । तत्र किं भावयेदित्याकांक्षायां मोक्षं भावयेत् । केन कथं ब्रह्मचर्यादिभिरुपकृत्य ।

ननु भावना भवनप्रयोजको व्यपारः, स च प्रयत्नः परिस्पन्दो वा । अत्र जपविधौ न तावत्पुरुषप्रयत्नो भावना

भवितुमर्हति, भाव्याभावात् । ननु 'मोक्षो भाव्य' इत्युक्तम्, सत्यमुक्तम् । नित्यस्य तस्य भाव्यत्वं न सम्भवतीति ब्रूमः । नहि मोक्षस्य नित्यत्वे कस्यापि विप्रतिपत्तिरस्ति । अत एव न परिस्पन्दो भावनेत्यपि सुवचम् । मानसजपाव्याप्तेश्च । नहि मानसेन जपेन मोक्षे भाव्ये शरीरपरिस्पन्दोऽपेक्ष्यते । तस्माद्भावनाया असम्भवात्तद्विषयको विधिरिह न सम्भवतीति ।

अत्रोच्यते—किं मोक्षस्य घटादेरिव पारमार्थिकं भाव्यत्वं न सम्भवतीत्यभिधत्से ? किं वाऽनाद्यनिर्वाच्याविद्यातिरोहितस्य मोक्षस्य श्रीरामसाक्षात्कारावान्तरव्यापारवता जपेनाभिव्यक्तिलक्षणमपि भाव्यत्वं न सम्भवतीति । आद्ये—सम्प्रतिपत्तिरेवोत्तरम् । नहि वयं न मोक्षस्य नित्यत्वमभ्युपगच्छामः । द्वितीयं तु न सहामहे । नहि मोक्षस्याभिव्यक्तिलक्षणभाव्यत्वाङ्गीकारे नित्यत्वव्याघातः । तस्माद्भाव्यसद्भावेन भावनासद्भावात्तद्विषयो विधिरवश्याभ्युपगन्तव्य इति सिद्धम् । प्रयोगश्च 'जप्तव्य इत्ययं विधिः अंशत्रयवत्त्वात् दर्शपूर्णमासाभ्यां यजेते'तिवत् । नच त्रितन्तुकपटेनाऽनैकान्तिकता शङ्क्या, अंशशब्देनेह 'किंकेनकथमा'मेवात्र विवक्षितत्वात् । नच पटस्य भावनाया इव 'किंकेनकथ'मंशवत्ता सम्भविनी । नच किमाकाङ्क्षोपशमकभाव्यांशाभावादसिद्धो हेतुरितिवाच्यम्, सम्प्रत्येव भाव्यस्य प्रतिपादितत्वादिति ।

ननु कोऽयं विधिरित्यस्य विधिरेवेत्युत्तरम्, को घट इत्यस्य घट एवेत्युत्तरमनुसरतीति चेत्—अथ कथमिदमुत्तरम्, यदुदाहर-

णोपन्यासेन विधिप्रश्नोत्तरस्याभावसत्त्वमापादयति । जिज्ञासितार्थविषयानवबोधाऽनवधूननादिति ब्रूमः । नहि जिज्ञासितस्य घटस्यानवबोधो घट इत्यभिधानमात्रेण शक्यावधूननः ।

अत्र ब्रूमः—प्रश्नवाक्यगतो विधिशब्दो विधिमाह, उत्तरवाक्यगतस्तु तद्विशेषम् । अपूर्वत्वेन विशेषितो हि विधिरुत्तरवाक्यगतविधिपदार्थः अतो विधिरेवेत्युत्तरं नानुपपन्नमिति । मैवम्, जप्तव्य इति विधेरपूर्वविधित्वस्याशक्याभिधानत्वात् । अत्यन्ताप्राप्तप्रापणं ह्यपूर्वविधिः । नच जप्तव्य इत्यनेनात्यन्तमप्राप्तं जपस्य मोक्षसाधनत्वं प्राप्यते । 'जप्येनैव तु संसिद्धि'रित्यादिना प्राप्तत्वात् । नच प्राप्ते वाऽपूर्वविधिरिति वक्तुं शक्यते, 'विधिरत्यन्तमप्राप्ते' इति तल्लक्षणाभिधानात् । अथ नियमविधिरस्तु । मैवम्, नियमो हि पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणमिष्यते । नच जप्तव्य इत्यत्रैतल्लक्षणमिति, येनायं नियमविधिः स्यात् । मोक्षस्य हि न जपव्यतिरेकोपायसाध्यतापक्षोऽस्ति, येन तं परित्यज्य मोक्षो जपोपायसाध्यत्वपक्षेऽवस्थाप्यते । यथा हि भोजनस्य दिगन्तरावच्छेदं यदृच्छया प्राप्तं परिहायाऽप्राप्तपूर्वदिगवच्छेदपक्षे प्राप्यते तत् 'प्राङ्मुखोऽन्नानिभुञ्जीते'ति, न तथेहेति वैषम्यम् । 'नियमः पाक्षिके सती'ति तल्लक्षणाभिधानात् । तर्हि परिसंख्यैव भवतु प्रकारान्तराभावादिति चेत्, इदमपि न सुन्दरम् । तल्लक्षणलक्षितस्य हि तत्त्वं वक्तव्यम् । अन्यथा घटस्यापि पटत्वापत्तेः । नच जप्तव्यमित्यत्र परिसंख्यालक्षणमस्ति । तत्खलु—

एकस्यानेकत्र प्राप्तस्यान्यतो विनिवृत्त्यर्थमेकत्र पुनर्वचनं परिसंख्येति। नच जप्तव्य इत्यत्रैतल्लक्षणं योजयितुं शक्यते। तथाहि— गर्दभाभिधान्यादानेऽश्वाभिधान्यादाने च 'इमाम- गृभ्णन् रशनामृतस्ये'त्यस्य मन्त्रस्य रशनाप्रकाशनसामर्थ्यल- क्षणेन लिङ्गेन विनियोगे प्राप्ते 'इत्यश्वाभिधानीमादत्ते' इति ब्रा- ह्मणवाक्यं विधिरूपमश्वाभिधान्यादाने विनियुङ्क्ते गर्दभाभिधा- न्यादानाद्विनिवर्तनाय। अन्यथा ब्राह्मणवाक्यस्य लैङ्गिकार्था- नुवादित्वेनाऽप्रामाण्यापत्तेर्विधित्वभङ्गप्रसङ्गात्। नच लिङ्गादीना- मभावाद्ब्राह्मणवाक्यं न विधिः, आदत्ते इत्यस्य पञ्चमलकार- त्वेनात्र विधेरावश्यकत्वात्। एवमत्र मोक्षस्य जपतदितरोभय- साध्यत्वप्राप्तौ जपसाध्यताभिधानं साधनान्तरसाध्यत्वनिवृ- त्त्यर्थं भवतीति परिसंख्या स्यात्। तथाच नास्ति, तस्मान्न प- रिसंख्याविधिरिति स्थितम्।

'तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते'

इति तल्लक्षणस्योक्तत्वात्। अतो जप्तव्य इत्यस्य त्रिवि- धविध्यनन्तर्भावाद्विध्यन्तराभावाच्च न विधिनाऽपि जप्तव्य इति शक्याभिधानमिति प्राप्तम्।

अत्रोच्यते—यदुक्तम्— न नियमविधिर्नच परिसंख्यावि- धिरिति, तदनुमन्यामहे। यत्तु—नापूर्वविधिरिति, तत्तु न मृष्यामः। जप्तव्य इत्यस्य प्रमाणान्तराप्राप्तं यद्राममन्त्रस्य मोक्षसाधनत्वं तत्प्रापकत्वात्। नच 'जप्येनैव हि संसिद्ध्ये'दि- त्यादिना तत्प्राप्तमिति वाच्यम् 'जप्येने'त्यादेः स्मृतित्वेन

जप्तव्य इति प्रापणीयार्थप्रापकत्वोपपत्तेः । नहि श्रुतिः स्मृतिप्रापितमर्थं प्रापयति, किं तर्हि स्मृतिरेव श्रुतिप्रापितार्थप्रापिका । मन्वादयो हि स्मर्तारः श्रुतितोऽवगतमेवार्थं स्मृत्वोपनिबध्नन्ति । इतरथा हि तद्वचनानामफलत्वेन कल्पितत्वापत्तेः । नहि पौरुषेयाणां वचनानां वैफल्ये प्रामाण्यं दृष्टमिष्टं वा । नच श्रुतावप्ययं प्रसङ्गः, तस्या अपौरुषेयत्वात् । पौरुषयत्वे च पुरुषस्य सम्भावितरागादिदोषतया तत्प्रणीताया अप्रामाण्यापत्त्यवश्यंभावात् । तस्मात् प्रमाणान्तराप्राप्तार्थप्रापकत्वेन 'जप्तव्य' इत्ययमपूर्वविधिरिति सिद्धम् ।

जपविधेरधिकारिविरहेऽनुपपत्तेरधिकारिणमाह—मन्त्रिणेति । गुरुतो गृहीतमन्त्रेणेत्यर्थः । जप्तव्य इति वैधस्य जपस्य विपक्षे बाधकप्रदर्शनेनाऽवश्यकर्तव्यतां द्रढयति–नैनं विनेति । एनं—राममन्त्रजपं विना देवो—द्योतनात्मकः स्वयंप्रकाशो रामो न प्रसीदति । साविलासाविद्यालक्षणमलाऽपगमेन स्वाभिन्नतया न प्रकाशत इत्यर्थः ॥ ११ ॥

ननु क्रियाभेदोऽस्ति न वा ? नाद्यः, अद्वैतभङ्गप्रसङ्गात् । न द्वितीयः, क्रियाभेदाभावेन तद्गर्भस्योपासनस्यानुपपत्तेरत-आह–क्रियेत्यादिना ।

क्रियाकर्मेज्यकर्तॄणामर्थं मन्त्रो वदत्यथ ॥
मननात्त्राणनान्मन्त्रः सर्ववाच्यस्य वाचकः ॥१२॥

क्रिया च कर्म च द्रष्टा च कर्ता च तानि तथा तेषाम्। क्रिया—मन्त्रोपासना, कर्म—तदङ्गभूतं होमादि, द्रष्टा—भजनीयो भगवान् रामः, कर्ता—उपासकः एतेषामर्थ-निवृत्तिं भेदापाकरणरूपां मन्त्रो वदति। सर्वात्मरामपरस्य मन्त्रस्येतरभेदप्रपञ्चनिवृत्तिनान्तरीयकत्वात्।

'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु'

इति कोशकारः। अधुना राममन्त्रशब्दनिरुक्तिं दर्शयन् 'ब्रह्मादीना'मित्यत्र स्पष्टमुक्तं सर्ववाचकत्वं विशदयति—अथेति। अथ—गुरूपदेशानन्तरं यन्मननं—तत्त्वस्यानुचिन्तनं तस्मात्, त्राणं रक्षणं सहेतुकात्संसारादुपासकस्य तस्य करणं त्राणनं तस्माच्चेति व्याख्येयम्। अन्यथा त्राणादित्येव वक्तव्यं स्यात्। यदाहुः शङ्करभगवत्पूज्यपादाः—

'मननात्तत्त्वपदस्य त्रायत इति मन्त्रमुच्यते भयतः'

इति। तत्त्वपदस्येत्यबाध्यस्वरूपस्येत्यर्थः ॥ १२ ॥

ब्रह्मादिभेदप्रपञ्चः श्रीरामाङ्गिकतया निरूपयितुमशक्यो वाच्यः, मन्त्रराजो वाचक इत्युभयविशिष्टस्य श्रीरामस्य बाह्य-पूजोपयोगि यन्त्रं शरीरत्वेन निरूपयति—सोऽभयस्येति।

**सोऽभयस्याऽस्य देवस्य विग्रहो यन्त्रकल्पना ॥**
**विना यन्त्रेण चेत्पूजा देवता न प्रसीदति ॥ १३ ॥**

इति श्रीरामतापिनीये प्रथमोपनिषत्।

यन्त्रकल्पना—कल्प्यमानं यन्त्रं वक्ष्यमाणं विग्रहः शरीरमित्य-

र्थः। शङ्खचक्रादिमत्त्वेन कल्पितं शरीरम्, तस्मिन्नेव पूजोपपत्तौ किं यन्त्रेणेति तत्राह-भिन्नेति। अलौकिके अर्थे शास्त्रमेव प्रमाणमिति भावः। प्रसीदतीति व्याकृतम्। इतिशब्दः प्रथमोपनिषत्समाप्तौ॥ १३॥

इति श्रीरामचन्द्रचरणानुगृहीतपरमहंसपरिव्राजकाचार्य-आनन्दवनविरचितायां श्रीरामपूर्वतापिनीयटीकायां रामकाशिकायां प्रथमोपनिषत् समाप्ता।



# अथ द्वितीयोपनिषत् ।

नैनं विना देवः प्रसीदती'ति 'देवता न प्रसीदती'त्यनयोर्देवदेवताशब्दयोः श्रीरामस्य परमात्मनो ज्ञानाधारतया द्योतनात्मकत्वोपस्थापकत्वेनापि चरितार्थयोर्न नियमेन स्वयंप्रकाशोपस्थापकत्वं सिध्यतीत्यनन्यथासिद्धेन शब्देन स्वयंप्रकाशत्वसाधनव्याजादुपक्षिप्तस्य मायाऽनुपहितस्य प्रकृतस्यैव रामनामधेयस्य परमात्मनस्त्रिगुणात्मकमायोपाधिवशाज्जगत्सृष्टिस्थितिलयकारणेन विराड्हिरण्यगर्भाऽव्याकृतावस्थायोगित्वं दर्शयन्नेव रामनामपरमात्माऽभिन्नस्य मन्त्रराजावयवस्य रेफाऽकारमकाराक्षरत्रयात्मकस्य बीजस्यार्थं दर्शयितुं द्वितीयामुपनिषदमारभते—स्वभूरित्यादिना ।

स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वेनैव भासते ॥
जीवत्वेनेदमों यस्य सृष्टिस्थितिलयस्य च ॥१॥

ननु घटादिवद्रामस्य वस्तुत्वात्सकारणता स्यात् । रामस्य दशरथं पितरमभ्युपगच्छतामवश्याभ्युपगन्तव्या सेत्याशङ्क्याह—स्वभूरिति । ननु 'स्वयमेव भवती'ति स्वभूः, 'स्वत एव भवती'ति वा ? नाद्यः, भवतेः कारणमन्तरेण भवनानुपपत्तेः । उपपत्तौ वा सर्वदा भवनापत्तेः, नियामकाभावात् । कारणमेव हि कार्यस्य कादाचित्कत्वे नियाम-

कम्। नच स्वयमेव भवतीति ब्रुवता कारणमिष्यते। न द्वितीयः, स्वस्यैव स्वं प्रति कारणत्वे विरोधात्। कारणत्वं नियतपूर्वभावित्वम्, कार्यत्वं च नियतपश्चाद्भावित्वम्। नच तदेव स्वं प्रति पूर्वभावि पश्चाद्भावि च भवितुमर्हति। तस्मात् 'स्वभू'रित्युक्तिरयुक्तेति।

अत्रोच्यते—उभयथापि नानुपपत्तिः। नच स्वयमेव भवतीति विग्रहवाक्यस्य विना कारणमुत्पद्यत इत्यर्थः, किं तर्हि स्वसत्तायां कारणं नापेक्षत इत्यर्थः। नहि नित्यस्य कारणापेक्षा सम्भवति। नापि 'स्वस्मादेव भवती'त्यस्यापि वाक्यस्य स्वस्य स्वयं कारणमित्यर्थः, येन विरोधः। किं तर्हि कारणान्तरान्नोत्पद्यत इत्यर्थः। तर्हि स्वस्मादुत्पद्यत इति प्राप्तमेवेति चेन्न, 'स्वयं दासास्तपस्विन' इत्यत्रेवाऽत्राप्याक्षेपाऽनवकाशात्। तस्मात् स्वभूरित्यनेन अकारणत्वमेव विवक्षितम्। नच सकारणत्वानुमानव्याकोपः, वस्तुत्वहेतोरनैकान्तिकत्वात्। अस्ति ह्याकाशादौ वस्तुत्वं नास्ति सकारणत्वमिति। यदि कश्चिद् ब्रूयात्—आकाशादयोऽपि पक्षतुल्या इति तं प्रति वस्तुत्वस्याप्रयोजकत्वमुद्भावनीयम्। घटादौ सकारणतायाः परिच्छिन्नत्वप्रयुक्तत्वात्। नच पक्षीकृते भगवति परिच्छिन्नता। किंच दृष्टान्तस्य साधनवैकल्येनापि नेदमनुमानं साधु। नहि वस्तुत्वं घटादौ समस्ति, परिच्छिन्नत्वात् 'अतोऽन्यदार्त'मिति श्रुतेश्च। यच्चोक्तम्—दशरथः पितेति रामस्य सकारणत्वमिति, तत्र वक्तव्यम्—किं शरीरस्य सकारणत्वमुत शदधिष्ठातृरामस्य? आ-

द्यमभ्युपगच्छामः। नहि तदभ्युपगमे किमप्यभिलषितमपगमिष्यति। द्वितीयं तु न सहामहे, (१) शरीराधिष्ठातॄणामशेषाणामप्यात्मनां सकारणत्वापत्तेः। सकारणत्वनिषेधकबहुतरनिगमवचननिचयोपलम्भादपि न भगवतः सकारणत्ववाचोयुक्तिर्युक्तिमती। तस्मान्न सकारणो भगवानिति 'स्वभू'रिति युक्तमुक्तमिति।

तस्य स्वभुवो घटादिवत् परप्रकाश्यतां व्यावर्तयति—ज्योतिर्मय इति। ज्योतिरेव ज्योतिर्मय इति स्वार्थिको मयट्। ज्योतीरूप इत्यर्थः। मयटो विकारार्थत्वं हि न समाश्रयितुं युक्तम्, वस्तुतः कार्यकारणत्वविरहितस्य ज्योतिर्विकारत्वेन कार्यत्वापत्तेः। तस्य परिच्छेदं वारयति—अनन्तरूपीति। अनन्तानि रूपाण्यस्य सन्तीति तथा। सर्वात्मक इत्यर्थः। अयमर्थः पूर्वमनेकश ईरितोऽप्यत्र पुनरीर्यते, श्रुतेरत्रार्थे तात्पर्यप्रदर्शनात्। अभ्यासो हि तात्पर्यलिङ्गमिष्यते। यदाहुः—'उपक्रमोपसंहारावभ्यास' इत्यादि। ननु न 'ज्योतिर्मय' इत्यनेन स्वयंप्रकाशतामाप्त्यवश्यंभावः, सूर्यादीनां ज्योतिष्ट्वेऽपि स्वप्रकाशत्वाभावात्। ननु स्वयं प्रकाशन्ते सूर्यादयः, न। घटादिवत्तेषामपि ज्ञानप्रकाश्यत्वात्। ननु घटादयः स्वपरिस्फुरणे तेजोऽपेक्षन्ते न सूर्यादय इत्यस्ति विशेष इति चेत्, को ब्रूते नास्तीति। सूर्यादीनां न घटादिवत् ज्ञानेन प्रकाश्यत्वं विहन्तुं शक्यत

(१) एतदग्रे 'न देवादेपि' इत्यधिकं मूलपुस्तके।

इति । अतो ज्योतीरूपत्वेन कथं स्वप्रकाशतासिद्धिः परमात्मन इत्यत्राह—स्वेनैवेति । स्वयंप्रकाशश्चिन्मात्र इत्यर्थः ।

ननु स्वप्रकाशत्वमतिदुर्लभम्, तल्लक्षणविरहात् । लक्षणतो हि वस्तुसिद्धिमिच्छन्ति लाक्षणिकाः । लक्षणं च न भवता स्वप्रकाशस्य स्वनाचि । 'स्वसत्तायां प्रकाशाव्यतिरेकित्वमेव स्वप्रकाशार्थ इति चेन्न, सुखादावतिव्याप्तेः । नहि सुखादिकं स्वसत्तायां घटादिवत् प्रकाशव्यतिरेकि । समानजातीयप्रकाशाऽप्रकाश्यत्वमिति चेन्न । किमिदं समानजातीयप्रकाशाप्रकाश्यत्वं विजातीयप्रकाशप्रकाश्यत्वे पर्यवस्यति, न वा ? प्रथमे— न स्वप्रकाशत्वासिद्धिः । नहि प्रकाश्यत्वं स्वप्रकाशतां न विनिहन्ति । प्रकाश्यस्य प्रकाशविषयत्वाव्यतिरेकात्, विषयत्वस्य जडत्वनान्तरीयकत्वात् । न चेत्, दीपादावतिव्याप्तिः । नहि दीपादि सजातीयेन दीपादिना प्रकाश्यते । दीपादिः स्वप्रकाश एवेति चेन्न, तस्य चक्षुरादिविषयत्वात्, विषयस्य स्वप्रकाशतानुपपत्तेः । अपिच सत्तया सजातीयेन प्रकाशेन प्रकाश्यत्वम्, अवान्तरजात्या वा ? आद्ये— सामान्यादावतिव्याप्तिः । नह्यनुवृत्तप्रकाशादिना प्रकाश्यस्यापि सामान्यादेः सजातीयेन प्रकाशेन प्रकाश्यत्वमस्ति, उत्तरत्रिकस्य निर्जातित्वेन कस्मिन्नपि प्रकाशेन तज्जातीयत्वस्य वक्तुमशक्यत्वात् । अत एव न द्वितीयोऽपि । अपिच किमवान्तरंजातिः—द्रव्यत्वं गुणत्वं कर्मत्वं ज्ञानत्वं वा ? न प्रथमतृतीयौ, ज्ञाने तदसम्भवात् । न द्वितीयः, तत्र हि—गुणत्वजात्या सजातीयेन प्रकाशेनाऽप्रकाश्यत्वमिति स्वप्रकाशल-

णार्थः स्यात्। तस्येह न कुशलं विलोकयामः। गगनादिष्वतिव्याप्तेः। नहि गगनादिषु द्रव्येषु गुणत्वगन्धोऽपि सम्भविता, येन गुणत्वजात्या सजातीयैः प्रकाशैः प्रकाश्यानि गगनादीनि न स्युः। नापि चतुर्थः, अव्याप्तेः। नहि ज्ञानत्वजात्या सजातीयप्रकाश्यत्वं सर्वस्य ज्ञानस्येति स्वप्रकाशे सम्भवति। अनुव्यवसायज्ञानेन व्यवसायज्ञानस्य प्रकाशनात्। अनुव्यवसायो हि–व्यवसायप्रकाशकं ज्ञानम्। स्वस्य स्वयमेव प्रकाश इति स्वप्रकाशार्थ इति चेत् स्ववृत्त्यापत्तेः। नहि स्वयमेव क्रिया कर्म चेति सम्भवति। अथ स्वयं चासौ प्रकाशश्चेति स्वप्रकाश इति चेन्नैतदपि, ईदृशस्त्रप्रकाशत्वस्य ज्ञानजडत्वाप्रत्यनीकत्वात्। तार्किकाणामपि हि मते ज्ञानं स्वयंप्रकाशस्य भवत्येव। तस्मात् स्वप्रकाशो लक्षणाभाव इति सिद्धम्।

अथ लक्षणाऽभावेऽपि प्रमाणेन भविष्यति स्वप्रकाशसिद्धिरिति चेत्–एतदपि रिक्तम्, प्रमाणाभावात्। न तावत्प्रत्यक्षं स्वप्रकाशे प्रमाणम्, भवन्मते स्वप्रकाशस्येन्द्रियाविषयत्वात्। विषयत्वे वाऽस्य प्रकाशत्वव्याकोपात्। अपिच प्रत्यक्षं प्रमाणं भवेदान्तरं, बाह्यं वा भवेत्? नाद्यः, ज्ञानस्य वेद्यत्वापत्तेः। नह्यान्तरेणावगाह्यमानं ज्ञानमवेद्यं भवितुमर्हतीति। न द्वितीयः, चक्षुरादेर्बाह्यविषयैकरसिकस्याऽभ्यन्तरस्वप्रकाशप्रकाशकत्वासम्भवात्। अथ योगिप्रत्यक्षं प्रमाणमस्तु, न। भवद्वचनेऽस्माकं विश्वासानुदयात्। व्यवहारे भट्टनयानुसारिभिरित्थमाख्यातुमुचितत्वाच्च। यच्चुच्यते– स्वयंप्रकाशत्वेऽनुमानमेव मानमिति, तन्न। तादृगनुमाना-

ऽनुपलम्भात् । 'अनुभूतिः स्वप्रकाशा अनुभूतित्वात् यन्नैवं तन्नैवम् यथा घट' इत्यनुमानमस्तीति चेन्न, अप्रसिद्धविशेषणतया पक्षस्याऽऽभासत्वात् । नहि पक्षीकृताया अनुभूतेः स्वप्रकाशत्वविशेषणं क्वचिदपि प्रसिद्धम् । अथ पक्षव्यतिरिक्ते क्वापि प्रसिद्धं भविष्यतीति चेत्तर्हि वक्तव्यम्—किं तत्र हेतुरस्ति नवा ? अस्ति चेत् , केवलव्यतिरेकित्वभङ्गप्रसङ्गः । नहि सपक्षवतो हेतोः केवलव्यतिरेकित्वं भवति । 'पक्षव्यापको विद्यमानसपक्षो विपक्षाद्व्यावृत्त' इति केवलव्यतिरेकिणो लक्षणात् । न चेत् , अनुभूतित्वहेतोरसाधारणता प्रसज्येत । 'सति सपक्षे पक्षमात्रवृत्तिरसाधारण' इति तल्लक्षणात् । तस्मान्नेदमनुमानमिह स्वप्रकाशे प्रक्रमेत । एवमनुमानान्तरनिकारणेऽपि युक्तयः स्वयमुन्नेयाः । नचोपमानं स्वप्रकाशत्वे ( प्रमाणम् ), उपमानस्य सादृश्यैकविषयत्वात्, स्वयंप्रकाशत्वस्य च सादृश्याऽनात्मकत्वात् । अर्थापत्तिस्तर्हि स्वप्रकाशतायां मानमस्तु, न । स्वप्रकाशत्वं विनाऽनुपपद्यमानस्य कस्यचिदभावात् । 'अनुपपद्यमानार्थदर्शनादुपपादकभूतार्थान्तरकल्पनमर्थापत्ति'रिति तल्लक्षणम् । नाप्यागमः स्वप्रकाशत्वे साधकोऽस्ति, तादृगागमाऽनुपलम्भात् । ननूपलभ्यत एव 'अत्रायं पुरुषः स्वयंज्योति'रिति । सत्यमुपलभ्यते, न पुनरयं ज्ञानस्वप्रकाशत्वसाधनाय प्रभवति । ज्योतिःशब्देन मनसोऽभिधानात् । नाप्यैतिह्यं स्वप्रकाशत्वे प्रमाणम् , तस्य प्रामाण्यानभ्युपगमात् । अभ्युपगमेऽपि वा प्रकाशप्रवादपारम्पर्य-

स्य वक्तव्यत्वात् । नच स्वप्रकाशे प्रवादपारम्पर्यं श्रूयते । स-म्भवस्तावत् स्वयंप्रकाशे प्रमाणमस्तु, मैवम् । तत्र ह्याधिकेन चा-ऽविनाभूतं न्यूनं साध्यते, सहस्रादिनेव शतादि । नचेह तथा-विधमधिकं न्यूनं वाऽस्ति, येन सम्भवप्रमाणप्रसरः स्यात् । ना-प्यभावः स्वप्रकाशत्वे प्रमाणतया शक्याभिधानः । अभाव-गोचरस्य तस्य भावस्वरूपस्वप्रकाशगोचरत्वाभिधानानुपपत्तेः । उपपत्तौ वा स्वप्रकाशस्याऽभावरूपत्वापत्तेः । नच नवमं किं-चित्प्रमाणमृषिभिरिष्यते, यत् स्वप्रकाशत्वे प्रमाणतयोपन्यस्येत । तस्मादप्रामाणिकं स्वप्रकाशत्वं शशशृङ्गादिवदनुन्मत्तेन भवता न शक्याभ्युपगमम् ।

अथोच्येत—अप्रकाशरूप एवायमस्तीति, नैतत्साधीयः । तथा सति जगदान्ध्यप्रसङ्गात् । तथाहि—जगन्न तावन्न प्रकाशते, 'घटः प्रकाशते, पटः प्रकाशते' इत्येवंरूपेण सर्वत्र प्रकाशानुग-मात् । प्रकाशमानं च जगत् केन प्रकाशताम् । न तावत् स्वतः, जगतो जडत्वात् । अथ परतः प्रकाशतमित्युच्येत—कथय, स कः परः प्रकाशः ? येन प्रकाशितं जगत् प्रकाशते इति सुवचं स्या-त् । आत्मेति चेत्—अहो ! विस्मरणशीलता देवानांप्रियस्य, यदिदानीमेवात्मनोऽप्रकाशरूपतामुदीरितामपि नानुसन्धत्से । अनुसन्धाने—तद्विपरीतप्रकाशतोपन्यासानुपपत्तेः । अथात्मनो-ऽप्रकाशरूपतामभिहितामननुसन्धायैव (१) प्रकाशरूपतोपन्यस्तेति

(१) ०मभिहितामभिसन्धानेनैव—इति मूलपुस्तके ।

मन्यसे, एवं तर्हि अनुसन्धानं निजुह्नूषोस्तव परस्परपराहतार्थवा-दित्वमपरिहार्यमापतितम्—आत्मा प्रकाशरूपोऽप्रकाशरूपश्चेति । अस्तु वा यथा तथा । प्रकाशरूपतामस्मदभिमतामनुभूतवानसीति त्वामस्मदनुकूलमनुमन्यामह एव । अथ आत्मातिरिक्त एव कश्चन प्रकाशो जगदान्ध्यप्रसङ्गभङ्गकृदस्तु । नैवम्, तादृशप्रकाशानुपलम्भात् । ज्ञानमेव तादृशप्रकाश उपलभ्यत इति चेत्तर्हि प्राप्तमेवात्मनः प्रकाशरूपत्वम्, ज्ञानस्याऽनात्मकत्वाभावादिति । आत्मनश्च ज्ञानात्मता 'सत्यं ज्ञान'मित्यादिश्रुतिसिद्धा न व्यासेद्धुं शक्या शाक्यपादपद्मानुपजीविना । अथात्मनोऽप्रकाशरूपत्वाय तदात्मकज्ञानस्याऽप्यप्रकाशरूपतेष्यते, तर्हि जगदान्ध्यापादानमप्रत्यूहमेव । तथाचाऽऽभाणकः—

'अन्धस्येवाऽन्धलग्नस्य विनिपातः पदे पदे'

इति । अपिच 'अतोऽन्यदार्त'मित्यादिश्रुतिवशाज्जगदारोपसिद्धमिति वक्तव्यम् । नचारोपो निरधिष्ठानो दृष्ट इष्टो वा । अतो जगदध्यासस्य चाऽधिष्ठानमवश्यमभिधेयम् । अधिष्ठानं च गवेष्यमाणमात्मातिरिक्तं नोपलभामहे । अत आत्मैवाधिष्ठानमुचितम् । सचेदयमात्माऽप्रकाशरूपः, कथं सप्रकाशता ? जडत्वाऽनवस्थानादिना स्वतः परतो वा प्रकाशमानतानुपपत्तेः । अप्रकाशमानस्य चात्मनोऽध्यासाधिष्ठानत्वमनुपपन्नं स्यात् । नह्यप्रकाशमानं पुरोवर्तिरज्जुभुजङ्गादि अध्यासस्याधिष्ठानं भवति । अतो जगदध्यासाधिष्ठानत्वासिद्धये वक्तव्यैवात्मनः प्रकाशमानता । सा च प्रकाशमानत्वेनेति स्वप्रकाशत्वमभिमतमभे-

दत्वादिनाम् । तच्च प्रागुक्तरीत्या लक्षणप्रमाणाभावादनुपपन्नमिति पूर्वपक्षसंक्षेपः ।

अत्राऽभिदध्महे—न तावल्लक्षणाऽभावः, स्वव्यवहारेऽन्यानपेक्षत्वस्यैव तल्लक्षणत्वात् । ननु घटादयोऽपि स्वव्यवहारे पटादीन्नापेक्षन्ते इति चेत् , नापेक्षन्ते । लक्षणेन तु न दोषमभाषिष्ठाः । नहि घटादीनां पटाद्यनपेक्षत्वोपन्यासमात्रेणाऽन्यानपेक्षा भवति । स्वव्यवहारे ज्ञानापेक्षिणां तेषामन्यानपेक्षत्वस्याऽसम्भवात् । अतो भवतो लक्षणातिव्याप्त्यभिप्रायो वृथाप्राय एव । अनुव्यवसायाधीनव्यवहारे व्यवसाये नास्तीदं लक्षणमिति चेन्न, अनुव्यवसायस्यैवानभ्युपगमात् । अथानुव्यवसायः किमर्थमभ्युपगन्तव्यः । व्यवसायासिद्धिपरिहारायेति चेत् , अथानुव्यवसायः सिद्धोऽसिद्धिं परिहरिष्यत्यसिद्धो वा ? न तावदसिद्धः, असिद्धस्याऽन्यासिद्धिपरिहारसामर्थ्यासम्भवात् । सम्भवे—व्यवसाय एवासिद्ध आत्मासिद्धिं परिहरतु, किमिति पराक्रम्यतेऽनुव्यवसायेन व्यवसायसिद्धौ । नापि सिद्धः, स्वतः सिद्धताऽनङ्गीकारात् । अङ्गीकारे वा व्यवसायेन किमपराद्धम् । स एव स्वतः सिद्धोऽस्तु । अथानुव्यवसायः परतः सिद्धस्तर्हि अनवस्था वाऽर्थपर्यन्तं असिद्धापत्तिर्वा स्यात् । तस्मादनुव्यवसायसमाश्रयणं परिश्रमायैव भवतः ।

ननु अभिवदनव्यवहारो हानोपादानादिरूपः, स च क्रियात्वात् पाकादिवत् कार्य एव । कार्यं च सामग्रीसापेक्षोत्पत्तिकम् । ज्ञाने चाऽभिवदनव्यवहारस्य सामग्रीसापेक्षत्वमवश्यमभिधातव्यम् ।

ततश्च अन्यानपेक्षत्वमभिधीयमानं न सम्भवतीति चेन्मैवम्, अन्यशब्देन ज्ञानान्तरस्यैव विवक्षितत्वात् । समाध्यादौ व्यवहाराभावादव्याप्तिरिति चेत्, अस्तु । तथापि लक्षणं न दोक्ष्यति । गुणाश्रयो द्रव्यमिति चेत्, नहि गुणाश्रयो द्रव्यमिति अत्राव्याप्तिर्नास्ति । उत्पन्नस्य द्रव्यस्य क्षणमात्रमगुणत्वस्य भवद्भिरेवेष्यमाणत्वात् । ननु गुणाश्रयो द्रव्यमित्यत्र गुणाश्रययोग्यतैव लक्षणार्थः । सा च द्रव्यस्य निर्गुणत्वावस्थायामपि विद्यत एव । योग्यताया यावद्द्रव्यभावित्वात् । अत एवैतद्दृष्टान्तावष्टम्भेन भवल्लक्षणस्योपादेयत्वोपन्यासोऽनुचित इति । नानुचितः, स्वलक्षणे विहितस्य दोषसमाधानस्याऽस्मल्लक्षणेऽपि विधातुं शक्यत्वात् । समाध्यादौ व्यवहाराभावेऽपि हि संविदन्तरानपेक्षतया व्यवहर्तुं योग्यता विद्यत एव । ननु व्यवहाराभाववत् तद्योग्यतापि समाध्यादौ न विद्यत इति चेत्तर्हि समयान्तरे व्यवहारदर्शनात्तद्योग्यता समाध्यादावभ्यङ्गीकर्तव्येति समम् । तस्मात् स्वप्रकाशलक्षणमिदमुक्तप्रकारेणाऽदुष्टमस्तीति न लक्षणाऽभावकृता स्वप्रकाशत्वासिद्धिरिति सिद्धम् ।

नापि स्वप्रकाशे प्रमाणाभावचोद्यमनवद्यम्, अनुमानादेरेव प्रमाणत्वात् । तथाहि—अनुभूतिःस्वप्रकाशा अनुभूतित्वात् न यदेवं न तदेवम् यथा घटः । ननु स्वयंप्रकाशत्वस्य पक्षे सिद्धावनुमानवैयर्थ्यम् । अन्यत्र प्रसिद्धौ तत्र हेतुसत्त्वेऽन्वयितया केवलव्यतिरेकिताभङ्गः । हेत्वसत्त्वे त्वसाधारणाऽनैकान्तिकतेति मार्गाऽरितमिति चेत्सत्यम्,

तथापि सामान्यतो दृष्टानुमानेन साध्यप्रसिद्ध्याश्रयणे भवदभिहितदूषणाऽनवकाशात् । तथाहि-वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् रूपवत् । नच केवलव्यतिरेकिवैयर्थ्यम्, सामान्यतो दृष्टानुमानेनाऽनिर्धारितधर्मिकतया वेद्यत्वस्य केवलव्यतिरेकिणो विशेषनिष्ठतया समर्थ्यमानत्वात् । कथमन्यथा शब्दादीनामष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं नैयायिकादयः साधयेयुः । नच 'विमता भूः शशविषाणोल्लिखिता भूत्वात् यन्नैवं तन्नैवम् यथा घट' इत्येवंजातीयकस्याप्यनेनैव(१)न्यायेन स्वीकर्तव्यतया प्रसिद्धिविशेषणतादोषो दत्तजलाञ्जलिः स्यादिति वाच्यम्, सामान्यतोऽनुमानेन साध्यसिद्धेरत्र सम्पादयितुमशक्यत्वात् । अतोऽनुभूतित्वहेतोरसिद्ध्यादिविरहो विशदतर एव । किंच अन्याऽप्रकाश्यस्य स्वयंप्रकाशमानस्य वस्तुनोऽसत्त्वे जगतः स्फुरणमेवानुपपन्नं सत्तादृशं वस्तु कल्पयतीत्यर्थापत्तिरपि स्वप्रकाशत्वे प्रमाणम् । सर्वतो बलवती ह्यर्थापत्तिः ।

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दृष्टयैकमत्यं सैव सर्वबलाधिका ॥

इति खण्डनकारः । आगमश्च 'अत्रायं पुरुषः स्वयंज्योतिः' 'तमेवभान्तमनुभाति सर्वं'मित्यादिः स्वप्रकाशत्वे प्रमाणम् नच ज्योतिःशब्दन्मन एवेति सुवचम् । स्वप्ने तस्यैव विषयाकारेण परिणतस्य ज्योतिष्ट्वानुपपत्तेः । ननु यदि स्वप्रकाश

(१) जातीयकमप्यनेनैव—इत्यादर्शपुस्तके ।

आत्मा, कथमत्र जगदध्यस्येत। अधिष्ठानाऽनवबोधकृतो ह्यध्यासः। स च सर्वदा स्वप्रकाशतया भासमानेऽनवबोधासम्भवात् कथं स्यात्। ननु तर्हि पुरोवर्तिनि भासमाने कथं रज्जुसर्परजताध्यासाः स्युः, शुक्तित्वादिविशेषानवबोधादिति ब्रूमः। तर्हि इहाऽप्यानन्दपरिपूर्णत्वादिविशेषानवबोधाज्जगदध्यास इति समः समाधिः। ननु सामान्यविशेषवति शुक्तिकादावियं विधाऽस्तु, निःसामान्यविशेषे कथमात्मनीयं विधा स्यात्। सत्यम्, पारमार्थिकसामान्याद्यभावेऽपि काल्पनिकसामान्यादिनाऽध्यासोपपत्तेरविरोधः। तस्माल्लक्षणप्रमाणसद्भावात् स्वप्रकाशत्वमप्रत्यूहम्। अतः 'स्वेनैव भासत' इति श्रुत्या स्वप्रकाशत्वं युक्तमुक्तमिति युक्तमुत्पश्यामः।

दीपादेरिव परप्रकाशकस्य स्वप्रकाशता किं वक्तव्येति 'किं पुन'र्न्यायमभिसन्धाय तां द्रढयति—'जीवस्त्वेनेदमों यस्ये'ति। जीवयति जडं जगदप्रकाशमानतया मृतकल्पं प्रकाशात्मकस्वसर्गेण सप्राणमिव करोतीति जीवस्तस्य भावस्तत्त्वम्। तेन इदं–सर्वं जगत् यस्य–स्वप्रकाशस्य परमात्मनो जीवत्वेन स्वयं प्रकाशमानत्वे सति परप्रकाशत्वेन हेतुना भासत इति समनन्तरवाक्यादनुवर्तते। 'तस्य भासा सर्वमिदं विभाती'ति श्रुत्यन्तरेऽप्ययमेवार्थः समर्थ्यते। कथं भासते, ओमिति। विराडाद्यात्मकं सद्भासत इत्यर्थः। अकार उकारो मकारश्चेति वर्णत्रयात्मकः ओंकारः। तत्र– अकारेण विराड् गृह्यते, उकारेण हिरण्यगर्भः, मकारेण

अव्याकृतम् । अथ को विराट् को हिरण्यगर्भः किमव्याकृतमिति, उच्यते—विराट् तावत् पञ्चीकृतानि पञ्च महाभूतानि गगनादीनि तत्कार्यं च सर्वम् । एतच्चात्मनः स्थूलशरीरम् । इन्द्रियैरर्थोपलब्धिर्जागरितम् । तदुभयाभिमान्यात्मा विश्वः । एतत् स्थूलं, जागरितं, विश्वश्चेति त्रयम्–अकारः । अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सप्तदशकं लिङ्गं भौतिकम्–हिरण्यगर्भः । इदं त्वात्मनः सूक्ष्मशरीरम् । करणेषूपसंहृतेषु जागरितसंस्कारजः सविषयः स्वप्नः । तदुभयाभिमान्यात्मा तैजसः । एतत्सूक्ष्मं, स्वप्नः, तैजसश्चेति त्रयम्—उकारः । स्थूलसूक्ष्मशरीरद्वयकारणमात्माऽज्ञानं साभासम्–अव्याकृतमित्युच्यते । इदं त्वात्मनः कारणशरीरम् । तच्च न सत् नाऽसत् नापि सदसत् , न भिन्नं नाऽभिन्नं नापि भिन्नाऽभिन्नम् , कुतश्चिन्न निरवयवं न सावयवं नोभयम् । किन्तु केवलब्रह्मात्मैकत्वज्ञानापनोद्यम् । सर्वप्रकारकज्ञानोपसंहारो बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिः । तदुभयाभिमान्यात्मा प्राज्ञः । एतदव्याकृतं, सुषुप्तिः, प्राज्ञश्चेति त्रयम्–मकार इति । ततश्च अकारोपनीतमात्मनः स्थूलशरीरं विराट्पदव्यपदेश्यं, उकारोपनीतमात्मनः सूक्ष्मशरीरं हिरण्यगर्भपदव्यपदेश्यं, मकारोपनीतं शरीरद्वयकारणं साभासमज्ञानं अव्याकृतं चेत्येतत्त्रयात्मकं सज्जगद्भासते यस्य जीवत्वेनेति । एतत्त्रयव्यतिरेकेण जगत एवाभावादिति । किञ्च–'अकारो ब्रह्मा, उकारो विष्णुः, मकारः शिव' इति पौराणिकाः । 'अः कलाख्या शक्तिः, उः नादः,

मः महाबिन्दु'रिति तान्त्रिकाः । अकारम्—अग्न्यृषिकं गायत्रीछन्दस्कं ब्रह्मदेवताकं पीतवर्णं भूस्थानकं जाग्रदवस्थाकमुदात्तस्वरकं ऋग्वेदकं गार्हपत्याग्निकं रजोगुणकं पृथ्वीतत्त्वकं सृष्टयर्थक्रियाकम्, उकारम्—वाय्वृषिकं त्रिष्टुप्छन्दस्कं विष्णुदेवताकं विद्युद्वर्णकं भुवःस्थानकमनुदात्तस्वरकं यजुर्वेदमाहवनीयाग्निकं सत्त्वगुणकमन्तरिक्षतत्त्वकं स्थित्यर्थक्रियाकम्, मकारम्—सूर्यर्षिकं जगतीछन्दस्कमीश्वरदेवताकं श्वेतवर्णकं स्वःस्थानकं स्वरितस्वरकं सामवेदकं दक्षिणाग्निकं तमोगुणकं द्यौस्तत्त्वकं संहारार्थक्रियाकं ऋषयोऽभिवदन्ति । एवं अकाराद्यक्षरत्रयात्मकब्रह्मादिप्रपञ्चजातं दृश्यमवभासते यस्य जीवत्वेनेति योज्यम् । स्मृतिरपि जगत ओँकारप्रभवत्वेन तदात्मकतामभिप्रैति—

ओँकारप्रभवा वेदा ओँकारप्रभवाः स्वराः ।
ओँकारप्रभवं सर्वं त्रैलोक्यं सचराचरम् ॥

इति । यस्य जीवत्वेन ओमात्मकं विराड्हिरण्यगर्भाऽव्याकृतात्मकमिदं जगत्प्रकाशते तस्य स्वयंप्रकाशत्वं किं वक्तव्यमिति भावः । ननु जगतः किं अभानमेव न स्यात् ? यस्य भानाय स्वप्रकाशस्य परमात्मनः प्रकाशत्वमाश्रीयते । मैवम्, अभाने हि प्रत्यक्षादिप्रमाणविरोधः । 'कुम्भोऽयं स्तम्भोऽय'मित्याकारेण जगति प्रत्यक्षादिकं प्रवर्तमानं बहुलमुपलभ्यते । यदि वाऽऽत्यन्तिकमभानं स्यात्तर्हि मूषकाविषाणवज्जगदनुपाख्यमेवेति वाच्यम् । (तत्र च)मूषकाविषाणाद्यनुपाख्यवैलक्षण्यस्य विशद-

मुपलभ्यमानत्वात्। किंच यत्सोपाख्यं तद्भानयोग्यम्, यच्च भानयोग्यं तत्कदाचिद्भासत एवेति प्रतिबन्धोऽस्ति। तथाच कदाचिद्भानस्य व्यापकस्य निवृत्तौ व्याप्यं भानयोग्यत्वमपि निवर्तेत। भानयोग्यत्वस्य च निवृत्तौ तद्व्याप्यसोपाख्यत्वमपि निवर्तेते। अन्यथा व्याप्यव्यापकभावभङ्गप्रसङ्गात्। तस्माद्भासत इति वाच्यम्। तत्र पर्यालोचयितव्यम्—किं स्वतः परतो वेति? न तावत्स्वतः, चिल्लक्षणापत्तेराचित्त्वव्याघातात्। अतः परतः, तत्परं जडमजडं वा? जडत्वे—कथं जगत्प्रकाशकं स्यात्। प्रकाशकत्वे च जगत्येव प्रकाशता कुतो न स्यात्। उभयोर्जडत्वाविशेषात्। अजडत्वे तु—तदजडमात्मा वाऽन्यद्वा? नान्यत्, तस्याऽन्यत्वे—जडत्वस्यावश्यकत्वेनाऽजडत्वपीडनापत्तेः। आत्मत्वे तु—स आत्मा श्रीरामादन्यः श्रीराम एव वा? अन्यश्चेत्, जडत्वापत्तिः 'अयमात्मा ब्रह्मे'त्यादिश्रुतिविरोधश्च। तस्मात् श्रीराम एवेति पक्षं युक्तमुत्पश्यामः।

ननु चिद्रूपः श्रीराम एव जगतोऽवभासको भवतु, तथापि तयोर्भास्यभासकयोः सम्बन्धो भास्यभासकभावातिप्रसञ्जकतया न समञ्जस इति सम्बन्ध एवानुसन्धेयः। ननु घटाद्यालोकयोरिवात्रापि कश्चिद्भविष्यतीति चेत्—को भविष्यति? संयोगः समवायस्तादात्म्यमेकार्थसमवाय एकार्थतादात्म्यं वा? नाद्यः, चितो निष्प्रदेशत्वात् संयोगस्य प्रदेशवृत्तित्वात्। अथ निष्प्रदेशाया अपि चितः आकाशस्येव काल्पनिकप्रदेशसमाश्रयणेन संयोग इत्युच्यते। मैवम्, तथापि गुणादिभिः सह संयोग-

स्य वक्तुमशक्यत्वात् । द्रव्ययोरेव हि संयोगो नाऽद्रव्ययोः नापि द्रव्याद्रव्ययोरित्यभियुक्तोक्तेः । न द्वितीयः, आरभ्यारम्भकभावरहितत्वात् । नहि चिदचितं जगदारभते, एकस्य द्रव्यस्य द्रव्यारम्भकत्वानुपपत्तेः । उपपत्तौ च एकेन तन्तुना पटारम्भप्रसङ्गात् । नाप्यचिताऽनेकया चिदारभ्यते, नित्यायां तस्यामारम्भस्यैवाऽनवकाशात् । ननु आरभ्यारम्भकभावरहितत्वेऽपि गगनतद्गतैकत्वयोर्व्यक्तिजात्योः समवायो दृश्यते । सत्यम्, तथापि न चिदचितोः समवायः समस्ति । अयुतसिद्धयभावात् । चित्खल्ववाह्या, वाह्यावाह्ययोश्च कथमयुतसिद्धिः । अत एव न तृतीयोऽपि । समवायवपदे हि मीमांसकैस्तादात्म्यमभिषिच्यते । अपिच तादात्म्यं न भिन्नयोः, गवाश्वयोरपि तादात्म्यापत्तेः । नचाभिन्नयोः, इत्येवं वक्तुमशक्यत्वात् । नह्येकस्मिन् घटे घटयोरिति प्रयोगोऽनुन्मत्तानां भवति । घटस्य स्वाभिन्नस्य स्वेन तादात्म्यासम्भवाच्च । नापि भिन्नाभिन्नयोः, विरोधात् । नहि भेदाऽभेदावेकाधिकरणौ भवितुं शक्नुतः, नापि चतुर्थपक्षमौ, रूपरसयोरेकस्मिन् घटादाविव चिदचितोरेकार्थसमवायस्य तादात्म्यस्य चानुपपत्तेः । नह्यचितः समवायादिसम्भवेऽपि चितोऽनाश्रितायाः समवायादि सम्भवति । अतश्चिदचितोः सम्बन्धाऽनिरूपणादवभास्यावभासकभावो न सम्भवतीति ।

अत्रोच्यते—यत्संयोगादिसम्बन्धः परमार्थतो न सम्भवतीति, तदनुमन्यामहे । तर्हि सम्बन्धाभावादप्रकाशत्वमापतितमिति घट्टकुट्यां प्रभातमिति चेन्न, आध्यासिकेन सम्बन्धेन

प्रकाशोपपत्तेः। अध्यासश्च सत्य एव वस्तुन्यसत्यस्याऽऽरोपः। असत्यं च जगत् सत्यायां चिति आरोपितमिति नाऽनयोः कथमाध्यासिकः सम्बन्धः स्यात् ? सति च सम्बन्धः स्यात्, सति च सम्बन्धे कथं वा प्रकाशनं न स्यात् ? सति च प्रकाशने कथं वा श्रीरामो न प्रकाशात्मकः ? प्रकाशात्मकत्वे च सति कथं वा न स्वप्रकाशकः ? अपितु स्वप्रकाश एवेति सिद्धम्।

स्वभूर्ज्योतिर्मयोऽनन्तः स्वप्रकाशोऽपि रामो रजआद्युपाधिकविराडादिद्वारा जगत्सृष्ट्यादिकारणमित्याह—सृष्टिस्थितिलयस्य चेत्यादिना ॥ १ ॥

कारणत्वेन चिच्छक्त्या रजःसत्त्वतमोगुणैः ॥
यथैव वटबीजस्थः प्राकृतश्च महाद्रुमः ॥२॥

चिच्छक्त्या रजःसत्त्वतमोगुणैः सृष्ट्यादेः कारणत्वेन श्रीरामोऽवतिष्ठत इत्यध्याहृत्य योज्यम्। चिदाविष्टा शक्तिः चिच्छक्तिः। शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। साभासा माया, सा च त्रिगुणा। तत्र-रजःप्रधानचिच्छक्त्युपाधिकविराड्रूपेण श्रीरामो जगतः सृष्टेः कारणम्, सत्त्वप्रधानचिच्छक्त्युपाधिकहिरण्यगर्भरूपेण स्थितेः, तमःप्रधानचिच्छक्त्युपाधिकाऽव्याकृतरूपेण लयस्य। एकरूपस्य वस्तुनो विचित्रकार्यकरत्वं विचित्रोपाधिभावेन भवतीति 'रजःसत्त्वतमोगुणै'रिति विचित्रा उपाधय उपन्यस्ताः। 'लय-

स्य चे'ति चकारः समुच्चये। स च भिन्नक्रमः सन्नध्याहृतेन अत्रतिना सम्बध्य प्रागुक्तं स्वप्रकाशत्वं समुच्चेष्यति।

इदमिह परमतात्पर्यमवगन्तव्यम्—शमादिसाधनवतां मुमुक्षूणां मन्त्रिणां मन्त्रजपो विहितः, स च मन्त्रार्थमननपूर्वकः। 'यदेव विद्यया करोति करोति तदेव वीर्यवत्तरं भवती'ति श्रुतेः। मन्त्रजपाङ्गानि विदधती स्मृतिरपि मन्त्रार्थाऽनुसन्धानमङ्गत्वेन विधत्ते—'मौनं मन्त्रार्थचिन्तन'मिति। मन्त्रार्थस्तु-ब्रह्मात्मैकत्वं महावाक्यप्रतिपाद्यम्। तत्पदार्थो ब्रह्म, त्वंपदार्थ आत्मा जीवापरपर्यायः। तत्रापि ब्रह्म तत्पदस्यार्थो भवद्वाच्यो लक्ष्यश्चेति द्वयीं विधामापद्यते। तत्र लक्ष्योऽर्थः 'स्वभू'रित्यादिविशेषणचतुष्टयेन प्रतिपाद्यते। वाच्यस्तु 'जीवत्वेने'त्यादिना। एवंच-अर्थद्वयात्मकं ब्रह्म राम एव एकाक्षरबीजरूपेण मन्त्रेण प्रतिपाद्यत इति। इदानीं प्रतिपाद्यप्रतिपादकयोः श्रीरामतद्बीजयोरभेदमभिप्रेत्य जगत्सृष्ट्यादिकारणत्वप्रापितं श्रीरामगतं जगदाधारत्वं श्रीरामबीजे सदृष्टान्तमाचष्टे—यथैवेति। प्राकृतो-लौकिकः, द्रुमस्य महत्त्वं बहुफलशाखापत्रप्ररोहान्वितत्वम्। चकारः समुच्चये, स च अश्वत्थादीनामनुक्तानां स्वस्वबीजस्थत्वं समुच्चिन्वन् दृष्टान्तबाहुल्यमवगमयति। एकेन दृष्टान्तेनाऽपरितुष्यन्तं प्रति दृष्टान्ताऽन्तरोपन्यासस्य युक्तत्वात्। ननु अश्वत्थादीनामपि महाद्रुमशब्देनैव प्राप्तौ नार्थः समुच्चयार्थेन चकारेणेति चेत्। मैवम्, महाद्रुमशब्दस्याऽश्वत्थादिप्रापणे सामर्थ्याभावात्। ननु महाद्रुमशब्दादश्वत्थाद्यप्राप्तिः कि-

मेतेषां महत्त्वस्याभावाद् द्रुमत्वस्य वा ? नोभयथापि, महत्त्वद्रुमत्वयोरश्वत्थादिषु कस्यापि विगानाभावात् । अतो महाद्रुमशब्देन तेषामप्राप्तिरिति प्रलापमात्रमिति चेत्—'वटबीजस्थ' इति समानाधिकृतेन महाद्रुमपदेन वट एव पर्यवस्यति, वृक्षान्तराणां प्रापयितुमशक्यत्वात् ॥ २ ॥

तथैव रामबीजस्थं जगदेतच्चराचरम् ॥
रेफारूढा मूर्तयः स्युः शक्तयस्तिस्र एव च ॥ ३ ॥
इति श्रीरामतापिनीये द्वितीयोपनिषत् ।

तथेति । रामस्य बीजं रामबीजं रामशब्दार्थप्रकाशकमेकाक्षरात्मकं मन्त्ररूपं बीजम्, तत्र स्थितम् । ननु रामतद्बीजयोरभेदमभिप्रेत्येयं श्रुतिश्चेत्प्रवृत्ते, तर्हि कथं भेदगर्भितसम्बन्धप्रतिपादकषष्ठीसमासः ? उपपद्यते, 'राहोः शिरः' 'शिलापुत्रकस्य शरीर'मित्यादिवदिति ब्रूमः । ननुरामतद्बीजयोरियं श्रुतिः कथमभेदमभिप्रेयात् ? नह्यभेदे प्रमाणमस्ति । अप्रामाणिकः कथमभिप्रायविषयः स्यादिति । अहो ! महान् व्यामोह आयुष्मतः, यदेतामेव श्रुतिमभेदे प्रमाणभूतामपि नावलोकयति । नन्वेषा श्रुती रामबीजे जगतोऽवस्थितिमाह, न पुना रामतद्बीजयोरभेदमिति चेत्सत्यम् , तथापि पूर्वापरपर्यालोचनया एतस्यास्तयोरभेदे पर्यवसानमवसीयते । तथाहि— पूर्वत्र जगदुपादाने श्रीरामे जगदवस्थितिरवगता, तद्बीजे त्वत्रावगम्यते । यदि तयोरभेदो न स्यात् , कथमियमुक्तिरुपपद्येतेति । ननु बीजस्य जगदाश्रयत्वेऽपि श्रीरामस्य जगदुपादानत्वं नानुपपन्नं तयोर-

भेदादिति यदुच्यते, तन्नोपपद्यते । तस्याऽसङ्गत्वात् । नचाऽसङ्गत्वमप्रमाणकम्, 'असङ्गो ह्ययं पुरुष' इति श्रुतेः । अथ वस्तुतोऽसङ्गस्याऽप्यविद्याशबलस्य तस्योपादानत्वमुच्यते । मैवम्, किमविद्या-भावरूपा विद्याया अभावो वा ? नान्त्यः, अभावशबलस्य ब्रह्मण उपादानत्वोक्तेरयुक्तेः । युक्तौ वा विशेषणीभूताऽभावस्याप्युपादानत्वाऽऽपातात् । नचेष्टापत्तिः, द्रव्यस्यैवोपादानत्वाभ्युपगमात् । नाद्यः, तस्यां प्रमाणाभावात् । अथ सर्परजतादिप्रतिपत्तय एव तत्र प्रमाणम् । नहि रज्जुशुक्त्याद्यविद्यामन्तरेण ता उत्पद्येरन्, तस्यास्ताः प्रति कारणत्वात् इत्युच्यते ! मैवम्, शुक्त्यादिषु रजतादिप्रतिपत्तीनामेवाभावात् । नहि गुरुचरणपरायणैर्विभ्रमोऽभ्युपगम्यते । तथाहि—सर्वे प्रत्यया यथार्थाः प्रत्ययत्वात् सम्यग्रजतप्रत्ययवत् । ननु सर्वशब्देन सम्यग्रजतप्रत्ययः सङ्गृह्यते न वा ? आद्यंशतः–सिद्धसाधनता, दृष्टान्तत्वेनोपन्यासश्चानुपपन्नः । नहि पक्ष एव दृष्टान्ततयोपन्यस्यमानो दृश्यते । न द्वितीयः, सर्वशब्दस्य महिमव्याहत्यापत्तेः । एष एव हि सर्वशब्दस्य महिमा—यदेकमप्यर्थमसौ न त्यजति । नैष दोषः, सर्वशब्दस्य सङ्कुचितवृत्तित्वाऽऽश्रयणेन सम्यग्रजतप्रत्ययव्यतिरिक्तपरत्वोपपत्तेः । नच सङ्कुचितवृत्तित्वस्य सर्वशब्दमहिमव्याघातकत्वेन त्याज्यत्वम् । वृद्धाऽनङ्गीकृतस्य सङ्कुचितवृत्तित्वस्य महिमव्याघातकत्वेन त्याज्यत्वात् । अङ्गीक्रियते च तत्र तत्र वृद्धैः सर्वशब्दस्य सङ्कुचितवृत्तिता 'सर्वे ब्राह्मणा भोजयितव्या' इत्यादौ ।

नच सा महिमव्याघातकृत्तया दृष्टेति परित्यज्यते । तद्वद-त्रापि सङ्कुचितवृत्तित्वं महिमव्याघातकमपि वृद्धाऽऽदृतं न परित्यज्यते ।

अथ प्रतिपत्तिगौरवभयात् प्रकारान्तरेण पक्षोपन्यासमिच्छसि तर्हि—'विगीताः प्रत्यया यथार्थाः' इत्यस्तु पक्षोपन्यासः । ननु प्रत्ययत्वमस्तु, माऽस्तु च यथार्थत्वम् । विपक्षे किं बाधकमिति चेन्न, प्रत्ययानां यथार्थत्वाभावे विषयव्यभिचाराऽवश्यंभावः स्यात् । तथाच सर्वत्र अनाश्वासप्रसङ्गः । अपिच भ्रमेऽवभासमानं रजतमसदवभासते सद्वा ? नाद्यः, असत्ख्यातिप्रसङ्गात् । नच शशशृङ्गादिकमसदपरोक्षावभासगोचरो दृष्टम् । नान्त्यः, 'नेदं रजत'मिति बाधदर्शनात् । नच बाध्यमानमपि सद्भवितुमर्हति, विरोधात् । बाधाऽविषयो हि शब्दस्य योऽर्थः स चेद्बाध्येत, कथं न विरोधः ? अपिच विभ्रमस्य कार्यत्वे तावन्न विवादः । कार्यं च कारणं विना न भवति । भ्रमस्य च न कारणमुपलभामहे । कारणाभावे चाऽयुक्तात्मलाभो विभ्रमः कथंः शक्याङ्गीकारः ? ननु चक्षुरादिकमेव कारणमुपलभ्यत इति चेन्न, तस्यासंयुक्तस्य विभ्रमजनकत्वेऽतिप्रसङ्गात् । संयुक्तस्य तथात्वे संयोगस्य प्रतियोगी वक्तव्यः । ननु रजतादिति चेन्न, असतस्तस्य संयोगप्रतियोगित्वाऽनुपपत्तेः, बाध्यमानस्य सत्त्वानुपपत्तेः । इह बाध्यमानस्यापि देशान्तरादौ सत्त्वं नानुपपन्नमिति चेन्न, तथापि संयोगप्रतियोगित्वस्याऽयोगात् । नहि व्यवहितेन चक्षुः संयुज्यते । अथ दोषवशाद्य-

रहितमपि चक्षुषा संयोगरहितं(१) ग्रहीष्यत इति चेन्न, तस्य दोषवशादेव सकलचाक्षुषपदार्थग्राहकत्वप्रसङ्गात् । नन्वौदर्यस्याग्नेर्भस्मकादिदोषदुष्टस्य बह्वन्नपाकजनकत्ववत् तिमिरादिदोषदुष्टस्य चक्षुषोऽसंयुक्तरजतप्रतीतिजनकत्वमास्त्विति चेन्न, भस्मकादीनामौत्सर्गिकपावकगतास्त्यन्नपाकलक्षणकार्यप्रतिबन्धकत्वात् । तर्हि बह्वन्नपाकलक्षणकार्यमकारणकमेवस्यात् । न स्यात्, कारणान्तरादपि तदुत्पत्तेरुपपत्तेः । अतो भ्रम एव नास्तीति न तल्लिङ्गमविद्याभानमुदयमासादयितुमीष्टे । तस्मादविद्याशबलितं रामाख्यं ब्रह्म जगत्कारणमिति रिक्तमुक्तमिति ।

अत्राऽऽचक्ष्महे—यदुक्तं प्रत्ययायाथार्थ्यानुमानम्, तदयुक्तम् । पूर्वोक्तरीत्या सिद्धसाधनादिदोषग्रस्तत्वात् । ननु प्रागीरितदोषसमाधिः कथं न हृदि निधीयते इति चेन्न, तथापि प्रतिपत्तिगौरवस्याऽपरिहार्यत्वात् । अथ 'विगीताः प्रत्यया यथार्था' इति करणे न प्रतिपत्तिगौरवमिति चेत्, तथापि विगीतपदेन विभ्रमानाभिधाय यथार्थत्वं साध्यते, उत यथार्थप्रत्ययानां वा ? न द्वितीयः, यथार्थप्रत्ययानां यथार्थत्वे विप्रतिपत्त्यभावेनाऽसाधनीयत्वात् । आद्ये विरोधः, नहि सम्भवति–विभ्रमा यथार्थाश्चेति । अपिच विभ्रमाः प्रामाणिकाः पक्षीक्रियन्ते अप्रामाणिका वा ? नाद्यः, विभ्रमाऽनङ्गीकारिणां विभ्रमप्रामाणिकत्वोपन्यासाऽनवकाशात् । न द्वितीयः आश्रयासिद्ध्यापातात् । अयथार्थव्यवहारे तु भूतप्रत्ययपक्षीकारे न कोऽपि दोष इति चेन्न, सर्वजगत्कारण-

(१) चक्षुरहितं—इति मूलपुस्तके ।

श्येश्वरज्ञानस्यायथार्थव्यवहारं प्रत्यपि कारणस्य यथार्थत्वाङ्गीकारिणं प्रति सिद्धसाधनत्वात् ।

यदत्रादि—विषयव्यभिचारे विज्ञानानामनाश्वासप्रसङ्ग इति । तन्न, व्यवहाराणामपि विषयव्यभिचारेऽनाश्वासप्रसङ्गस्य दुर्वारत्वात् तुल्यत्वात् । यदप्यधायि—रजतस्याऽसतोऽवभासे शून्यख्यात्यापत्तिरिति । तदपि न, सत्त्वादिना रजतस्यानिर्वचनीयस्याऽवभासाभ्युपगमात् । यच्चाऽगादि—कारणाभावाद्विभ्रमस्याऽऽत्मलाभ एव नेति । तच्च न, चक्षुरादेरेव कारणत्वात् । ननु समीचीनप्रत्ययजननस्वभानां चक्षुरादीनां कथमसमीचीनप्रत्ययजनकत्वमिति चेत्, समीचीनव्यवहारजननस्वभावानां प्रत्ययानामसमीचीनव्यवहारजनकत्वं कथम् ? दोषवशादिति चेत्, चक्षुरादिष्वपि तथा किं नेष्यते ? ननु दोषाणामौत्सर्गिककार्यप्रतिबन्धकत्वमेव न विपरीतकार्योत्पादकत्वमिति चेन्न, प्रत्ययानामपि तर्हि दोषवशादसमीचीनव्यवहारजनकत्वाभावापातात् । अपिच दावाग्निदाहलक्षणो दोषो वेत्रबीजेभ्योऽपि कदलीकाण्डानुपजनयन् दृश्यते । यदप्यभाणि—दुष्टस्य चक्षुषो व्यवहितग्राहकत्वे सर्वचाक्षुषग्राहकत्वप्रसङ्ग इति । तदप्यसारम्, दुष्टस्य प्रत्ययस्य व्यवहितरजतव्यहारजनकत्वे सर्वव्यवहितव्यहारजनकत्वप्रसङ्गस्य तुल्यत्वात् । अनिर्वचनीयवादाश्रयणे तु व्यवहितग्राहकत्वशङ्काऽनवकाश एव । तस्मादतस्मिंस्तद्रूपाणां(१)विभ्रमाणामवश्याश्र-

(१) ०स्ताद्विरूपाणां—इति आदर्शपुस्तके ।

यणीयस्त्वात् तैरविद्यानुमाने तच्छबलितं ब्रह्म जगदुपादानमिति सकलमनाकुलम्।

अथ विभ्रमो ज्ञानविशेषः। ज्ञानं च न विषयमन्तरेण सत्तां लभते। अतो विभ्रमस्य विषयो वक्तव्यः, नच वक्तुं शक्यते। तथाहि—किमधिष्ठानं विभ्रमस्य विषयो रजतादिर्वा? नाद्यः, विभ्रमस्याऽबाध्यत्वापत्तेः। नहि विषयस्य सत्त्वे विज्ञानं बाध्यते। न द्वितीयः, विकल्पासहत्वात्। तथाहि—रजतादिकं सत् अथाऽसत् आहो सदसत्? आद्येऽपि—पुरोवर्तिनि सदन्यत्र वा? नाद्यः, विभ्रमस्याऽबाध्यत्वापत्तेः। द्वितीयेऽपि—हट्टादौ सत्तद्बुद्धौ वा? नाद्यः, हट्टादौ सतोऽत्र भानानुपपत्तेः। न द्वितीयः, आन्तरस्य बहिर्भानानुपपत्तेः। ननु मतद्वयेऽपि दोषवशाद्भानोपपत्तिरिति चेत्तर्हि पुरोवर्तिनः पुरोवर्त्यात्मकत्वं तत्संसर्गो वा? आन्तरस्य बाधात्मकत्वं तत्संसर्गो वा विषय इत्यापातितम्। तस्यच कथमपरोक्षावभासविषयता भवेत्? कथं वा रजताद्यर्थिनो ग्रहणादिव्यवहारगोचरता स्यात्? अत्यन्तासत्त्वात्। नहि पुरोवर्तितादात्म्यादिकमत्रान्यत्र च सम्प्रति समयान्तरे च सद्भवितुमर्हति। अथात्यन्तासत्यपि अपरोक्षप्रतीतिप्रवृत्ती किं न स्यातामिति चेन्न, तथा सत्यात्मख्यात्यन्यथाख्यातिवादिनोरसत्ख्यातिस्वीकारेणाऽपसिद्धान्तापत्तेः। किंच सर्वसामर्थ्यविरहिणोऽत्यन्तासतो विषयीभवनसामर्थ्यमेव नास्ति, तत्र कथमपरोक्षप्रतीतिप्रवृत्ती स्याताम्?

अथ मतं विज्ञानमेव स्वहेतु(?)विशेषप्रापितस्वभावविशे-

षविषयीभवनसामर्थ्यविरहितेऽप्यत्यन्तासत्याविद्यासामर्थ्यादव-भासकं भवतीति, तर्हि किमस्याः शक्यम् ? असदेवेति चेत्कथं तर्हि किमुत्पादयितुं शक्यं बोधयितुं वा ? नाद्यः, अत्यन्ताऽसतस्तथात्वायोगात् । तथात्वे चाऽत्यन्तासत्त्वाभावप्रसङ्गात् । न द्वितीयः, बोधयितुमित्यनेन बोधजननोपस्थानात् । तथा सति को दोष इति चेत्, अनवस्थाप्रसङ्गादिति ब्रूमः । माऽस्तु तर्हि शक्यमिति चेन्न, शक्याभावे शक्तेरेवाभावापत्तेः । शक्ति-रपि माभूदिति चेत्तर्हि विज्ञानमविद्यासामर्थ्यादवभासकमिति भवदीयभाषणस्याऽपभाषणत्वमापद्येत। अपिच हट्टादौ बुद्धौ वाऽस्तीत्यत्र न मानं पश्यामः अनुभव इति चेत्, भ्रान्त्यनुभवो बाधानुभवो वा ? नाद्यः, तस्य पुरोवर्तिरजतादावेकस्या बुद्धेर्हट्टादौ तदावेदकत्वाभावात् । भावे वा बुद्ध्यादौ रजतमिति प्रतीत्या-पत्तेः । न द्वितीयः, तस्य पुरोवर्तिरजताद्यभावमात्रगोचरत्वात् । नन्वेवं बुद्ध्यादौ रजताद्यसत्त्वे तथापि कथं न रजतादि बा-ध्यते इति चेन्न, प्रसक्त्यभावात् । अत्रेत्र तत्रापि प्रसक्तिर-स्तीति चेत्, प्रमाणेन भ्रान्त्या वा ? नाद्यः, बाध्यत्वानुप-पत्तेः । न द्वितीयः, तत्र भ्रान्तेरेवाऽनुत्पादनात् ।

ननु रजतस्य संविदाकारत्वाभावे सत्यापरोक्ष्यानुपपत्तिरि-तिचेन्न, बहिःस्थस्यैव तदुपपत्तेः(?) । नहि बाहिःस्थ्यं संविदाकारः, अबाहिःस्थ्यस्य संविदाकारतया बाहिःस्थ्यस्य तदाकारत्वानुपपत्तेः॥ किंच अध्यस्तं बुद्धौ चेत्तात्त्विकं, तर्हि कपीनां शीतार्तानां गुञ्जा-पुञ्जादावारोपितेन वह्निनाऽतात्त्विकेन तरूणामिह दाहप्रसङ्गात् ।

तत्राऽप्यतात्त्विकत्वान्नायं प्रसङ्ग इति चेत्, शून्यानिर्वचनीयत्वादयोरन्यतरस्वीकारापत्तेः । तस्मादत्र सदन्यत्र चाऽसद्रजतं विभ्रमस्य विषय इति न सुन्दरम् । न द्वितीयः, किमत्रेदानीमेव वाऽसत्? आहो सर्वत्र सर्वदैवाऽसत्? नाद्यः, दत्तोत्तरत्वात् । न द्वितीयः, अत्यन्तासतोऽपरोक्षावभासाविषयत्वासम्भव इत्युक्तत्वादेव । नापि तृतीयः, विरोधात् । नहि यत्सत्तदसत्, यच्चाऽसत् तत्सत् भवितुमर्हति । सत्त्वासत्त्वयोः परस्परोपमर्दनरूपत्वात् । तस्माद्विषयाभावान्निर्विषयस्य च ज्ञानस्याऽऽत्मलाभानुपपत्तेर्निविषयो विभ्रमो नात्मानं लभत इति न तेनाऽविद्यानुमानमिति ।

अत्र वदामः—भवेदेवम्, यदि विभ्रमो निर्विषयो भवेत् । ननु विषयत्वमदूष्यमिति चेत् । सत्यम्, दूष्यस्य दूषितत्वेऽप्यदूष्यस्य किमायातम् । अदूष्यो विषयः क इति चेत्, अनिर्वचनीयत्वमिति वदामः । अथ किमिदमनिर्वचनीयत्वम्? सदसद्विलक्षणत्वमिति चेन्न, पुनरुक्तेः । (१) किं शब्दावृत्तिमात्रेण पुनरुक्तिः, एकार्थशब्दावृत्त्या वा? नाद्यः, यमकादावपि पुनरुक्तिप्रसङ्गात् । न द्वितीयः, सदसत्पदावृत्त्यावेकार्थत्वाभावात् । पूर्वं सच्चाऽसच्चेति द्वन्द्वः, अनन्तरं सच्च तदसच्चेति कर्मधारयः । नचानयोः समासयोरर्थैक्यं युक्तं वक्तुमिति । तर्हि वक्तव्यमत्र प्रमाणम् । नहि प्रमाणमन्तरेण प्रमेयसिद्धिः । ननु बाधरूपात्यैकोभयाऽनात्मकत्वप्रसिद्ध्यनुपपत्तिः

---

(१) अत्र 'सदसदित्युच्यते यच्चेति' इत्यधिकं मूलपुस्तके ।

प्रमाणमनिर्वचनीयत्वे । सत्त्वे ह्यनुपपद्यमानेन बाधेन सद्वैलक्षण्यम्, असत्त्वेऽनुपपद्यमानया चाऽपरोक्षख्यात्याऽसद्वैलक्षण्यम्, एकस्योभयानात्मकत्वप्रसिद्ध्या चैकस्य रजतादेः सदसदुभयात्मकत्वेऽनुपपद्यमानया सदसद्वैलक्षण्यमानीयत इति कथमनिर्वचनीयत्वमप्रमाणकमिति चेत् । मैवम्, बाधादीनामन्यथैवोपपत्तेः । तथाहि—पुरोवर्तिनि सन्न भवतीत्येतावतैव बाधोपपत्तौ रजतादेरन्यत्र सत्त्वं कथमप्रत्यूहं न स्यात्? क्वाचित्कसत्त्वमात्रेणैवाऽपरोक्षख्यात्युपपत्तौ बाधोपनीतं पुरोवर्तिन्यसत्त्वं कथमकण्टकं न स्यात्? एकस्योभयाऽनात्मकत्वाऽप्रतीतिरपि देशभेदेनैव तस्यैव रजतस्य सदसदुभयात्मकत्वेऽपि न विरुध्यत इति सदसदात्मकमपि कथमप्रतिपक्षं न स्यात् । तदेवं ख्यात्याद्यनुपपत्तिरानिर्वचनीयत्वे न मानमिति स्थितम् ।

बाधविषयत्वमनिर्वचनीयत्वमिति चेन्न, शुक्तिकादेरप्यनिर्वचनीयत्वप्रसङ्गात् । शुक्तिकादिकमपि नेदं रजतं किन्तु शुक्तिरिति बाधस्य विषयप्रतिपन्नोपाधौ निषेधप्रतियोगित्वे तदिति चेन्न, रजत एव रजतप्रतिपत्तिभाजि कुतश्चित्कारणात् 'नेदं रजत' मिति विभ्राम्यति पुरुषे रजतस्यापि प्रतिपन्नोपाधौ निषेधप्रतियोगिनोऽनिर्वचनीयत्वप्रसङ्गात् । कारणात्रितयजन्यत्वमनिर्वचनीयत्वमिति चेन्न, समवायादिकारणत्रितयजन्ये पटादावतिव्याप्तेः । संस्कारसंप्रयोगदोषजन्यत्वं विवक्षितमिति चेत्, प्रागेवेच्छ । (?) किं तावदीयेंत—मम दोषोद्भावनावकाश एव न स्यात् । नत्वयमल्प एवापराधः । इदं तु लक्षणमदुष्टमिति चेन्न,

दोषप्रत्यभिज्ञायामतिव्याप्तेः । सा हि ज्वरादिहेतौ पित्तादिदोषे वान्ते भिषजां 'स एवाय'मिति जायमानसंस्कारसंयोगाभ्यामिव कर्मभूतेन दोषेणापि जन्यते । प्रतिभासमात्रशरीरत्वमनिर्वचनीयत्वमिति चेन्न, मात्रशब्दस्य वैयर्थ्यात् । प्रतिभास्यात्मना सत्त्वव्यवच्छेद एव मात्रत्वार्थ इति चेत्, तथा सति आत्मन्यतिव्याप्तेरपरिहार्यत्वात् । आत्मापि हि भवतां मते प्रतिभास्यरूप एव, न पुनः प्रतिभासरूपः । तस्मान्नास्त्यनिर्वचनीयत्ववचनमिति ।

अत्र ब्रूमः—तत्तद्रूपनिरूपणाऽसहिष्णुत्वस्यैवाऽनिर्वचनीयलक्षणात् । ननु रजतादौ नेदं लक्षणमस्ति, सदादिरूपेण निरूपणं सहते इति चेन्न, तथाहि—रजतादिकं तावन्न सत्, बाधात् । अबाध्यमानं हि सत् । नाप्यसत्, अपरोक्षप्रतीतिविषयत्वात् । नह्यपरोक्षप्रतीतिविषया घटादयोऽसन्तः । नापि सदसत्, विरोधात् । तस्मात् सदादिरूपेण रजतादिनिरूपणं न सहत एव । ननूक्तमेव—देशभेदेन सत्यसति च रजते बाधादेरुपपत्तौ रजतादेः सदादिरूपेण निरूपणं निरन्तरायमिति चेन्नैवम्, बाधस्य देशान्तरे रजतमस्तीत्यत्रौदासीन्यात् । अपरोक्षप्रतीत्या पुरोवर्तिमात्रसंयोगजन्ययापि बाधविरोधात् पुरोवर्तिनि रजते सत्त्वबोधनाय प्रवर्तितुमशक्यत्वात् । अत एव स्वस्वमात्रविषयशून्ययोर्बाधख्यात्योर्विरोधपरिहाराय सदसत्त्वयोर्देशभेदेन व्यवस्थापकताऽभावाद्देशभेदेनैकस्यैव रजतस्य सदसदुभयात्मकत्वस्य व्यवस्थापयितुमशक्यस्य ख्यातिबाधाभ्यां

पुरोवर्तिन्येव प्रसञ्जने सत्येकस्यैवोभयाऽनात्मकत्वप्रसिद्धेरनुपपन्नायाः सदसदुभयरूपताव्युदासपरत्वाच्च। तस्मान्न रजतादेः सत्त्वाऽसत्त्वादिना निरूपणम्। किञ्च पुरोवर्तितादात्म्यादौ गगनप्रासादादौ च स्वप्ने देशभेदावलम्बनेनापि सत्त्वादिरूपेण ? न निरूपणम्। किंच पुरोवर्ति निरूपयिष्यसि। ननु सत्त्वेनाऽनिरूप्यस्यासत्त्वमावश्यकम्, असत्त्वेनाऽनिरूप्यस्य सत्त्वमावश्यकम्,

'परस्परविरोधे हि न प्रकारान्तरस्थितिः'

इति न्यायात्। अतो रजतादेः सत्त्वासत्त्वयोरन्यतरप्रकारावश्यंभावान्न तदुभयविलक्षणत्वप्रकारवाचोयुक्तिर्युक्तिमतीति चेन्न, अनिर्वचनीयत्वप्रतिक्षेपेण निर्वचनीयत्वस्य भवदभ्युपगतन्यायबलादेव भवताऽवश्याभ्युपगन्तव्यत्वात्। त्वमेव हि 'परस्परविरोधे ही'ति न्यायमभाषिष्ठाः। नह्ययं न्यायः सत्त्वासत्त्वे एव विषयीकरोति, न निर्वचनीयत्वाऽनिर्वचनीयत्वे इति सम्भवति। अन्यथा वैपरीत्यस्यापि वक्तुं शक्यत्वात्। तस्मादनिर्वचनीयत्वस्य लक्षणाभावचोद्यमवद्यमेवेति सिद्धम्। नापि प्रमाणाभावः, ख्यात्याद्यनुपपत्तेरेव प्रमाणत्वात्। यथा चेदं प्रमाणं तथा विस्पष्टमेव। किंच–'विमतं अनिर्वचनीयं बाध्यत्वात् यन्नैवं तन्नैवम् यथाऽऽत्मा' इति प्रयोगोऽपि प्रमाणमनिर्वचनीयत्वे। तस्मात्–अनिर्वचनीयविषयलाभाल्लब्धात्मिकया भ्रान्त्या कार्येणाऽविद्याभाने तदालिङ्गितं श्रीरामाख्यं ब्रह्म जगदुपादानमित्यवदातम्। तथाच रामाभिन्नं (ब्रह्म)

(१)जगदुपादानं जगदाधार इति सिद्धम्।

बीजमुद्धरति—रेफेति। 'वर्णात्कार' इति सामान्यतः प्राप्तस्य कारप्रत्ययस्यापवादतया 'रादिफ' इत्यनेन इफस्य विधानात् रेफ इति सिध्यति। अतो रेफो रवर्णस्तमारूढाः तदव्यवधानेन घटनान्मूर्तयस्त्रिस्रः—अकारद्वयं मकारश्चेति वर्णास्त्रयः समुदिता रेफारूढा बीजं स्युः। बीजमित्यनुषञ्जनीयमध्याहरणीयं वा। ननु मूर्तिशब्देन ब्रह्मादिदेवत्रयपरतया पुराणादौ प्रसिद्धेन कथं त्रयो वर्णा लभ्यन्ते? तेषां ब्रह्मात्मकत्वादिति ब्रूमः। प्रथमोऽकारो विराडात्मकब्रह्मरूपः, द्वितीयोऽकारो हिरण्यगर्भात्मकविष्णुरूपः, मकारस्तु अव्याकृतात्मकसदाशिवरूपः। ननु रेफरूपं व्यञ्जनं आकारो मकारश्चेत्येतावदेव बीजे प्रतीयते, किमिदमुच्यते—प्रथमोऽकारो द्वितीयोऽकार इति। मैवम्, आकारप्रतीतौ तदवयवयोः अकारयोः प्रतीतेरावश्यकत्वात्। ननु अकारद्वयमकाराणां सृष्ट्यादिशक्तिविरहिणां कथं ब्रह्माद्यात्मकत्वमत आह—शक्तय इति। सृष्ट्यादिशक्तय इत्यर्थः। ननु 'शक्तय' इत्यस्य केनान्वयः? किं रेफारूढा इत्यनेन, मूर्तय इत्यनेन वा? नाद्यः, अकारादीनां शक्तिमत्त्वप्रतिपादनाऽभावप्रसङ्गात्। न द्वितीयः, अकारादीनां शक्तिमत्तया वक्तव्यानां शक्तिरूपताप्रतिपादनस्यानुपयोगात्। मैवम्, समासावयवभूतमप्यारूढपदं बुद्ध्या विभज्य मूर्तिपदेन संयोजने मूर्त्यारूढा इति सिद्धौ अकारादीनां शक्तिमत्त्वसिद्धेः। यदा तु रामा-

(१) अत्र 'रामभिन्न' इत्यधिकं आदर्शपुस्तके।

भिन्नमपि बीजं रामाद्भेदेन विवक्षित्वा वाचकं क्रियते, तदा रेफेण स्वभूरित्यादिप्रतिपादितं स्वप्रकाशं ब्रह्मोपस्थाप्यते। तत्र च मूर्तयो विराट्सूत्राव्याकृतात्मकब्रह्मविष्णुमहेश्वराख्याः प्रथमाकारद्वितीयाकारमकारैर्बीजावयवभूतैः प्रतिपादिताः।

आरूढाः—स्रजि सर्पादय इवाऽऽरोपिताः। उपलक्षणं चैतत्, त्रिगुणात्मकस्य सर्वस्यापि जगतस्तत्रारोपितस्य वक्तव्यत्वात्। अथ रेफस्य कथं स्वप्रकाशपरत्वम्? तस्याग्निवाचकतया प्रसिद्धस्य स्वप्रकाशे प्रवृत्तावविरोधात्। अत एव च श्रीराममन्त्रोद्धारे 'तारकं दीर्घानल'मिति श्रुतिरनलशब्देनाऽग्निवाचकं रेफं विवक्षितवती। ब्रह्मकल्पोऽपि 'वभिश्यं (?) शयनं विष्णो'रित्यत्र वह्निशब्देन रेफमेव वह्निवाचकमभिप्रैति। ननु रेफस्य स्वप्रकाशब्रह्मपरस्य विराडादित्रयोपलक्षितसकलत्रिगुणजगदुत्थापकवर्णत्रयेण सामानाधिकरण्यं किं 'नीलमुत्पल'मित्यादिवत्? आहोस्वित् 'चोरः स्थाणु'रित्यादिवत्? नाद्यः, ब्रह्मजगतोरुभयोरपि तुल्यत्वात्सत्यत्वापत्तेः। नहि नीलोत्पलाद्यात्रन्यतरस्यापि मिथ्यात्वमस्ति। न द्वितीयः, जगतो मिथ्यात्वे विनिगमकाभावात्। नहि स्थाणुसाक्षात्कारश्चोरस्येव, परमात्मसाक्षात्कारः प्रपञ्चस्य बाधकः कस्यचित्कुत्रचित्कदाचिदुत्पद्यमानो दृष्टः। अतो न रेफस्य वर्णान्तरसामानाधिकरण्यं वरेण्यमिति।

तदसारम्। यत्खल्वत्रादीः नीलोत्पलादितुल्यतानभ्युपगमपराहतम्(?)। यदपि चोरस्थाणोः सामानाधिकण्यतुल्यताश्रयणे दूषणमभाणीः—जगतो मिथ्यात्वे विनिगमकं नास्तीति,

तत्कुतः । स्थाणोरिव परात्मनः सर्वथा साक्षात्काराभावादिति चेन्न । अननुष्ठितसाक्षात्कारोपायानां साक्षात्काराभावं ब्रूषे, अनुष्ठितसाक्षात्कारोपायानां वा ? नाद्यः, अङ्गीकारात् तावता दोषाभावात् । न द्वितीयः, विरोधात् । अपिच 'अतोऽन्यदार्त'-मिति श्रुतिरेव बीजजगच्छब्दानां सामानाधिकरण्यतुल्यतामवगमयति । तत्र रेफारूढवर्णत्रयस्य प्रणवगतवर्णत्रयोपस्थापितार्थोपस्थापकस्य प्रणवाभेदात् प्रणवस्य बिन्द्वादयोऽवयवा अपि गुणोपसंहारन्यायेनोपसंहरणीया इत्यवगन्तव्यम् । सप्तावयवो हि प्रणवः श्रीशङ्कराचार्यैरभिहितः—

सप्तात्मकस्य तारस्य परौ द्वौ तु परौ यतः ।
अतश्च शक्तिशान्ताख्यौ न पद्येते (१) परैः सह ॥

इति । नन्वविद्याशवलितस्य ब्रह्मणो जगत्कारणत्वं न युक्तम्, साङ्ख्यैः प्रकृतेरेव जगत्कारणत्वाभिधानादित्यत आह—एवेति । शबलं ब्रह्मैव जगत्कारणं न प्रकृतिरित्यर्थः । न प्रकृतेर्जगत्कारणत्वे प्रमाणमस्ति । या या श्रुतिरुदाह्रियते, तस्यास्तस्याः परमात्मावच्छेदकत्रिगुणमायापरत्वात् । अपिच अचेतनायाः प्रकृतेः कथं जगदुपादाने प्रवृत्तिः ? रथादेर्नगरप्रापण इवेति चेत् ; तत्र चेतनाधिष्ठितेनोपपत्तेः । नच भवता प्रकृतेश्चेतनाधिष्ठितत्वमिष्यते । चेतनस्योदासीनत्वाङ्गीकारात् । ननु दुग्धवत्प्रकृतेरपि प्रवृत्तिरुपपद्यते । यदाहुः—

'वत्सविवृद्धिनिमित्तक्षीरस्य यथा प्रवृत्तिरज्ञस्य'

---

(१) पद्वेते—इति मूलपुस्तके ।

इति, न। तत्रापि गवादिशरीरावच्छिन्नेन चेतनेनैवाधिष्ठानात्। परमाणवस्तर्हि जगदुपादानम्, जगदपेक्षया न्यूनपरिमाणत्वात्। न्यूनपरिमाणा हि तन्तवः पटोपादानतया दृश्यन्ते। नच व्यापकस्य ब्रह्मणो जगदपेक्षया न्यूनपरिमाणत्वं सम्भवति, येन जगदुपादानता सुवचा स्यात्तत्राह—चेति। चशब्दो निषेधे, अव्ययानामेनकार्थत्वात्।

अयं भावः—परमाणुः परमाण्वन्तरेण संयुज्य द्व्यणुकादिक्रमेण जगदुपादानमिति वक्तव्यम्। तन्न, संयोगस्यैवानुपपत्तेः। तथाहि—परमाणुः कात्स्न्र्येन संयुज्यते एकदेशेन वा? नाद्यः, संयोगस्य प्रदेशवृत्तित्वव्याघातापत्तेः। अप्रदेशवृत्तित्वमेव तर्हि संयोगस्याऽस्त्विति चेन्न, पटेन घटसंयोगस्य सर्वपटवृत्तितया सर्वस्मिन् पटे घटत्वापत्तेः। न द्वितीयः, निरवयवानां परमाणूनामेकदेशाभावात्। कल्पिता एकदेशा भविष्यन्तीति चेत्तर्हि कल्पितप्रदेशवर्तिनः संयोगस्यापि कल्पितत्वापत्तौ तदसमवायिकारणस्य जगतोऽपि कल्पितत्वापत्तौ सिद्धं नः समीहितम्। अधिकपरिमाणस्य ब्रह्मणः कथमुपादानत्वमुपपन्नमिति चेन्न, अघटमानघटनापटुतराविद्याशबलितस्य ब्रह्मणो जगदुपादानत्वे विरोधाभावादिति सकलमनाकुलम्। इतिशब्दो द्वितीयोपनिषत्समाप्तौ॥ २॥

इति श्रीरामचन्द्रचरणानुगृहीतपरमहंसपरिव्राजकाचार्य-आनन्दघनरचितायां श्रीरामपूर्वतापिनीयटीकायां द्वितीयोपनिषत् समाप्ता।

# अथ तृतीयोपनिषत् ।

प्रथमोपनिषदि 'जप्तव्य' इत्यनेन श्रीराममन्त्रजपो विहितः । स चार्ऽर्थज्ञानपुरःसरं क्रियमाणो वीर्यवत्तरो भवति, 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति श्रुतेः । राममन्त्रस्य त्रिपदं वाक्यम् । ततश्च वाक्यार्थज्ञानस्य वाक्यावयवभूतपदार्थज्ञानसापेक्षतया मन्त्रवाक्ये प्रथमावयवभूतस्य बीजरूपस्य पदस्य द्वितीयोपनिषदा तत्पदार्थशोधनपरयाऽर्थोऽभिहितः । अधुना तृतीयोपनिषदा त्वंपदार्थशोधनं कुर्वत्या मन्त्रद्वितीयतृतीयावयवभूतयोरुपरितनपदयोरर्थोऽभिधीयते । ननु प्रकृतिपुरुषरूपयोः सीतारामयोर्भेदो बीजादस्ति न वा ? आद्ये—भिन्नतया रजतवत् तयोरपारमार्थिकत्वमापद्येत । चरमे—बीजपात्रशरीरयोस्तयोर्बीजवाच्यत्वं न स्यात् । नहि बीजमेव बीजस्य वाच्यं भवितुमर्हति, वाच्यवाचकभावस्य भेदगर्भितत्वादित्याशङ्क्यान्तिममेव पक्षमादाय समाधत्ते—सीतारामाविति ।

सीतारामौ तन्मयावत्र पूज्यौ
जातान्याभ्यां भुवनानि द्विसप्त ॥
स्थितानि च प्रहतान्येव तेषु
ततो रामो मानवो माययाऽधात् ॥ १ ॥

सीतारामौ—प्रकृतिपुरुषौ विराट्शक्त्यभिधेयावित्यर्थः । अत्र—अस्मिन्मन्त्रराजे तन्मयौ—बीजात्मकौ पूज्यौ—ज्ञातव्यौ, धातूनाम-

नेकार्थत्वात् । नत्वर्चनीयौ, अर्चनप्रकरणस्याग्रे वर्तिष्यमाणत्वात् । तद्भिन्नयोरपि तद्वाच्यत्वं कल्पितभेदाश्रयणान्न विरुध्यते । राह्वभिन्नस्यापि शिरसो राहुसम्बन्धित्वमित्रेत्यर्थः । यथा बीजस्य जगदुत्पत्त्यादिकारणत्वम् , एवं प्रकृतिपुरुषयोः सीतारामयोर्जगदुत्पत्त्यादिकारणत्वं यदि न स्यात्तदा बीजविरुद्धधर्माधिकरणयोस्तयोर्बीजाभेदो न स्यात् । अतस्तयोर्जगदुत्पत्त्यादिकारणत्वमाह—जातानीत्यादिना । द्विसप्त—द्विगुणितानि सप्त, चतुर्दशेत्यर्थः । अधस्तनानि सप्त उपरितनानि च सप्तेति भुवनानां चतुर्दशत्वमवगन्तव्यम् । 'आभ्या'मिति पञ्चमी अनयोरिति सप्तमीत्वेन विपरिणम्या । स्थितानि—समवेतानि, प्रहृतानि—विनष्टानीति व्याकर्तव्यम् । एतेन प्रकृतिभूतसीतासहायस्य रामस्य परमात्मनो निमित्तस्यैव सतो जगदुपादानत्वमप्युक्तं भवति । एवशब्देन निमित्तोपादानयोर्भेदो व्यावर्त्यते । 'तत्सृष्ट्वा तदेवाऽनुप्राविश'दिति श्रुतिमनुसृत्याह—तेषु ततो राम इति । ततो—जगत्सृष्ट्यनन्तरम् 'रमन्ते यस्मिन् योगिन' इति रामः—परमात्मा मायया—प्रकृत्या । 'मायां तु प्रकृति'मिति श्रुतेः । तेषु—भुवनेषु सृष्टेषु अधात्—आत्मानं प्रावेशयदित्यर्थः । जडस्य प्रविष्टस्यापि जगत्प्रकाशत्वं न स्यादत आह—मानव इति । मा—प्रमा ज्ञानम्, तया नवो—नूतनः । नवत्वेन प्रतिहतप्रकाशनसामर्थ्यं लक्ष्यते । स्वयंप्रकाश इत्यर्थः । यद्वा मायया कृत्वा मानवो मनुष्यमूर्तिः, न परमार्थतः । यदाह श्रीमहादेवः—'मायामानुषचारित्रे'ति । एवं

भगवति जगदनुप्रविष्टे जगति पञ्चांशाः प्रतिभासन्ते—अस्ति,भाति, प्रियं, रूपं, नामेति। तत्राद्यास्त्रयो रामस्य परमात्मनः, इतरौ द्वौ जगतः। यदाहुराचार्याः—

अस्ति भाति प्रियं रूपं नाम चैतन्यपञ्चकम्।
आद्य त्रयं ब्रह्मनिष्ठं जगद्रूपं ततो द्वयम्॥

इति। एतदुक्तं भवति—अस्तिभातिप्रियशब्दोपस्थापितं सत्तास्फूर्त्यानन्दात्मकत्वं रामपदात्रयवत्रभूतेन राऽक्षरेण गृह्यते, नामरूपत्वं चारोपितं माऽक्षरेणेति। सकलजगदारोपाधिष्ठानं परमात्मा रामपदेन गृह्यत इति॥ १॥

ननु रामस्य सृष्टजगदनुप्रवेशोऽभ्यधायि, स नोपपद्यते। अपरिच्छिन्नस्य नित्यानुप्रविष्टस्याऽऽगन्तुकानुप्रवेशोक्त्यनुपपत्तेरिति चेन्मैवम्। अपरिच्छिन्नस्याऽप्याकाशवदनुप्रवेशोपपत्तेः। सत्प्रकाशानन्दात्मकस्य जगदनुप्रवेशेन जगदसत्त्वादिव्यावर्तकतया जगत्प्राणत्वमागतं जगदात्मकत्वं च। तद्रामशब्दार्थेन विवक्षन् नमःशब्देन योजनामाह—जगत्प्राणायेति।

जगत्प्राणायाऽऽत्मनेऽस्मै नमः स्या-
न्नमस्त्वैक्यं प्रवदेत् प्राग्गुणेन॥ २॥

इति श्रीरामतापिनीये तृतीयोपनिषत्।

नमः—प्रह्वीभावः । क्रियाया अभावेन प्रसक्तं साकाङ्क्षत्वेनाऽऽनर्थक्यं वारयति—स्यादिति । प्रह्वीभावपरेण नमःपदेन संसारसागरनिमग्नतया प्रह्वीभूतो जीवो लक्ष्यते । ततश्च जीवलक्षको नमःशब्दो रामपदसमानाधिकृतः सन् जीवपरमात्मनोरेकत्वे पर्यवस्यति । नच मध्ये चतुर्थी अजागलस्तनसमानेति वाच्यम् , 'नमःस्वस्ती'त्यादिना प्राप्तायास्तस्या अपरिहार्यत्वात् । तदिदमाह—नमस्त्विति । तुशब्दः पराऽपरात्मनोरेकत्वे विरोधाऽऽशङ्कां नुदति । स्वप्रकाशत्वादिगुणवता परमात्मना कथमपरात्मनस्तद्राहितस्याऽभेदः स्यादिति तत्राह—प्राग्गुणेनेति । पूर्वोक्तस्वप्रकाशत्वादिगुणेनेत्यर्थः । परमात्मसाक्षात्कारेण वह्निना संसारित्वादिविरुद्धधर्ममहावनदाहे परिशुद्धो जीवश्चिन्मात्रेण निष्प्रपञ्चेन परमात्मना सह तादात्म्यमनुभवतीत्यभिप्रायः । इतिशब्दस्तृतीयोपनिषत्समाप्तौ ॥२॥

इति श्रीरामचन्द्रचरणानुगृहीतपरमहंसपरिव्रजकाचार्य-आनन्दवनरचितायां श्रीरामपूर्वतापिनीयटीकायां तृतीयोपनिषत्

समाप्ता ।

# अथ चतुर्थोपनिषत् ।

प्रथमोपनिषदि 'मन्त्रो जप्तव्य' इति जपो विहितः । द्वितीयायां वाक्यार्थज्ञानस्य पदार्थज्ञानरूपकत्वान्मन्त्रवाक्यप्रथमावयवभूतस्य बीजरूपस्य पदस्य व्याख्या कृता । तृतीयस्यामुपरितनयोर्द्वितीयतृतीयपदयोरित्येवं पदार्थशोधनं कृत्वा वाक्यार्थकथनाय विना मन्त्रेण पूजा न सिध्यतीति प्रागभिहितमन्त्रनिरूपणाय चतुर्थीमारभते–जीववाचीत्यादिना ।

जीववाचि नमो नाम चात्मा रामेति गीयते ॥
तदात्मिका या चतुर्थी तथा चाऽऽयेति कथ्यते ॥१॥

तत्र तावद्वाक्यार्थं 'जीववाची'त्यादिकया प्रथमकण्डिकया कथयति । नमो नाम–(नम) इति शब्दो जीववाचि–जीवस्त्वंपदार्थस्तस्य वाचकम् । रामेतिप्रातिपदिकेन चात्मा–परमात्मा गीयते–कथ्यते । आत्मशब्दो जीवेश्वरसाधारणोऽपि तत्पदार्थेश्वर इवावगन्तव्यः । नमःपदेन जीवस्याऽवगमितत्वात् । रामेति प्रातिपदिकार्थमुक्त्वा ततो विहितायाश्चतुर्थ्येकवचनरूपाया विभक्तेरर्थमाह–तदात्मिकेत्युत्तरार्धेन । तथाच सति नमोरामपदयोर्जीवपरमात्मपरत्वे सति या चतुर्थी 'आय' इत्येवमात्मिका कथ्यते–रामप्रातिपदिकात्परा अभिधीयते, सेत्यध्याहृत्य तदात्मिकेति योज्यम् । तादात्म्यं–तत्स्वभावत्वं जीवब्रह्मणोरात्यन्तिकमभेद-

मवगमयती(१)ति । नन्विह चतुर्थीविभक्तिरेव नास्ति, क-स्यास्तादात्म्यप्रवणता कथ्यते । भ्यांभ्यसोरभावेऽप्येकवचन-मस्तीति चेन्न, 'ङे' इत्यश्रवणात् । अथ स्वरूपेणाऽश्रवणेऽपि 'ङेर्य' इतिविहितयकारादेशरूपेण श्रूयते इति । मैवम्, तथा सति 'श्रुतायें'त्येवोपादीयेत, नतु 'आये'ति । आयेत्येता-वतश्चतुर्थ्येकवचनादेशत्वाभावात् । नैष दोषः, 'सुपिचे'तिविहि-तदीर्घाकारविशिष्टस्यैव गृहीतस्य यकारादेशस्य चतुर्थीविभक्तित्व-व्याघाताभावात् । केवलस्यैव तर्हि यकारस्य गृहीतत्वे (दीर्घाकार)-विशिष्टगृहीतौ नैकमप्यर्थमवलोकयाम इति चेन्न, रामप्रातिपदि-काऽन्तादेशदीर्घविशिष्टतयोच्चारणस्य विभक्ते रामप्रातिपदिक-सम्बन्धित्वविशिष्टप्रतिपत्त्यर्थत्वात् । रामाख्यस्य परमात्मनो-ऽपरोक्षजीवस्य तादात्म्योपवर्णनेन परोक्षता निरस्ता । नमःश-ब्दोपस्थापितजीवस्य रामतादात्म्यप्रतिपादनेन अशनायादिषडू-र्मियोगो निरस्तः । अत एव श्रुतिः—'तद्योऽहं सोऽसौ योऽसौ सोऽहं'मिति ।

ननु (नमो) रामपदाभ्यां समानाधिकृताभ्यां जीवब्रह्म-णोरेकत्वेऽवगमिते किमनुपयोगिनोऽतिरिक्तस्य बीजस्य मन्त्रे-ऽनुप्रवेशेनेति । मैवम्, शब्दरूपस्य बीजस्यापि रामसामानाधिक-रण्येन रामाऽभेदप्रतिपादनार्थत्वात् । अत एव प्रागभ्यधायि—'सीतारामौ तन्मया'विति । ननु संसारित्वाऽसंसारित्वादिविरुद्ध-धर्माध्यासवतोः परापरयोः कथमात्यन्तिकमैक्यमुच्यते । गग-

(१) अत्र 'भगवती' इत्यधिकं मूलपुस्तके ।

नावच्छिन्नत्वसलिलावच्छिन्नत्वादिविरुद्धधर्माक्रान्तयोर्बिम्बप्रतिबिम्बयोरपि कथमैक्यं भवताऽभिधीयते । विरुद्धांशाऽपाकरणेनेति चेत्तर्हि प्रकृतेऽपि विरुद्धांशाऽपाकरणेनाऽस्तु । नन्वियमन्याश्च श्रुतयः खल्वात्मपरमात्मनोरभेदे प्रमाणीक्रियन्ते । अथ किम्? ननु कथय, कथं प्रत्यक्षादिविरोधे श्रुतय एताः प्रामाण्यमभेदे भजन्ताम्? प्रत्यक्षादिभिर्हि भेद एव तयोर्गृह्यते । नैवम्, न तावत्ता प्रत्यक्षं जीवब्रह्मणोर्भेदग्रहणक्षमम् । तथाहि—देवदत्तः स्वस्य परस्मादात्मनो भेदं न प्रत्यक्षतो ग्रहीतुं शक्ष्यति, स्वस्य प्रत्यक्षत्वेऽपि परमात्मनः प्रत्यक्षत्वाभावात् । उभयोरपि हि धर्मिप्रतियोगिनोः प्रत्यक्षत्वेन भेदप्रत्यक्षता । नाप्यनुमानेन । तथाहि—'अहं परमात्मनो भिन्नस्तद्विरुद्धधर्मवत्त्वा'दिति यदनुमानं, तदासिद्धग्रस्तम् । नहि स्वस्य परमेश्वरविरुद्धधर्माक्रान्तत्वं देवदत्तादिः प्रत्यक्षतो गृह्णाति, परमेश्वरस्याऽप्रत्यक्षत्वात् । नाप्यनुमानेन, तादृशलिङ्गाभावात् । अतो विरुद्धधर्माक्रान्तत्वहेतुरसिद्धः । नाप्यर्थापत्तिः, परापरात्मनोर्भेदे प्रमाणान्तरस्यानुपलम्भात् । विरुद्धधर्मानुपपत्तिरुपलभ्यत इति चेन्न, प्रागुक्तनयेन विरुद्धधर्मत्वस्याऽप्रामाणिकतया तत्प्रतियोगिताया अनुपपत्तेः शशशृङ्गायमाणत्वात् । नाप्यागमः, तस्य सर्वस्यापि परमात्मनोरभेदे एव प्रमाणत्वस्य विशदमुपलभ्यमानत्वात् । ननु 'द्वा सुपर्णे'ति 'द्वे ब्रह्मणी'ति च श्रुतिर्भेदपराऽपि विलोक्यत इति चेन्न, तस्या अन्यतोऽसिद्धभेदानुवादिन्यास्तत्र प्रामाण्याभावात् । तस्मात्—प्रत्यक्षादिविरो-

षम्भावात् परिपन्थिविरहितेयं श्रुतिरन्याश्च कथं न जीवब्रह्मणोरभेदं बोधयितुं क्षमिष्यन्ते । अथ विरुद्धधर्मत्वाभावेऽपि विरुद्धस्वभावयोर्जीवब्रह्मणोर्नाऽभेदो युज्यते, मैवम् । तयोर्विरोधस्यैवाऽसिद्धेः । तथाहि—कोऽयमनयोर्विरोधः ? किं सहाऽनवस्थानलक्षणो विरोधः ? अथवा बाध्यबाधकभावः ? आहोस्विद्भावाभावात्मकत्वरूपः ? उत परस्पराऽनात्मकत्वात्मकः ? नाद्यः, व्यापकव्याप्ययोः सहावस्थानात् । सहाऽनवस्थाने—व्यापकावच्छिन्नप्रदेशेऽन्यस्यावस्थानाभावाद्व्यापकत्वापत्तेः । न द्वितीयः, तदसिद्धेः । नहि जीवः परं परो वा जीवं निहन्ति । न तृतीयः, उभयोरपि भावत्वात् । नापि चतुर्थः, परस्पराऽनात्मकत्वस्यैव भेदत्वात् । तेनैव च भेदसाधने आत्माश्रयत्वापत्तेः साध्यवैशिष्ट्यप्रसङ्गाच्च ॥ १ ॥

ननु जीवब्रह्मणोरेकत्वमेव चेत् श्रीराममन्त्रराजार्थः, तर्हि राममन्त्ररामयोर्वाच्यवाचकभावसिद्धिर्न्याहन्येतेत्याशङ्क्याह—मन्त्रोऽयमिति ।

**मन्त्रोऽयं वाचको रामो वाच्यः स्याद्योग एतयोः ॥**
**फलदश्चैव सर्वेषां साधकानां न संशयः ॥ २ ॥**

जीवब्रह्मणोरेकत्वमपि विचारे क्रियमाणे राम एव । अन्यथा तयोरेकत्वमन्यद्रामोऽन्य इति द्वैतापत्तेः । अतो न विरोध इति भावः । ननु मन्त्रमात्रमनुष्ठेयं किमर्थानुसन्धानेन, अर्थमात्रं वाऽनुसन्धेयं किं मन्त्रानुष्ठानेन । एकैकमात्रानुसन्धा-

नेऽपि फलस्यावश्यकत्वादित्यत आह—योग एतयोरिति । एकैकमात्रानुसन्धानस्य पापक्षयादिफलकत्वेऽपि योगस्यैव मोक्षलक्षणफलदत्वं नान्यस्येति भावः । विरक्तैरनिष्यमाणस्यापि दिव्यभोगफलस्य दातृत्वं चशब्दार्थः । एवकारोऽयोगं व्यवच्छिनत्ति । फलदो भवत्येवेत्यर्थः । सर्वेषामित्यनेन साधकानामसाधकानां चोभयेषामपि फलभाक्त्वप्रसक्तिं व्यावर्तयति–साधकानामिति । उपासकानामित्यर्थः । साधकानामिति बहुवचनस्य त्रित्वपर्यवसानेऽपि चरितार्थतायां कतिपयसाधकपरित्यागप्रसक्तिः स्यात्, तां निरस्यति–सर्वेषामिति । उक्तमर्थं द्रढयति–न संशय इति । नित्यसिद्धस्य मोक्षस्याऽनुत्पाद्यस्य फलत्वाभावेऽप्यविद्यातिरोधानादविद्यमानतैव भवतीति, ब्रह्मसाक्षात्कारेणाविद्या(१)पगतावुत्पत्तिरिव भवतीति फलत्वमौपचारिकमुपपद्यत इत्यनुसन्धेयम् ॥ २ ॥

ननु वाचकमन्त्रोपासनेनैव वाच्यो रामः साक्षात्कृतो भवतीति को नियमः । लौकिकश्रीरामगीताद्यनुसन्धानेनापि रामाभिमुख्योपपत्तेरित्यत आह—यथा नामीति ।

यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत् ॥
तथा बीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत् ॥ ३ ॥

यो नामी—संज्ञी देवदत्तादिः, स यथा वाचकेन नाम्ना—संज्ञया कीर्त्यमानोऽभिमुखो भवेत्—विमुखोऽपि

(१) ०णाविरोधो-इति आदर्शपुस्तके ।

संमुखः स्यात्, तथा बीजात्मको मन्त्र एकाक्षरः। यद्वा 'बीजमात्मनि मन्त्रशरीरे यस्ये'ति षडक्षरो मन्त्रो वाचको वाच्यस्य मन्त्रिणो—मन्त्रदेवतात्वान्मन्त्रवतो रामस्याभिमुखो भवेत्। सक्षात्कारमुत्पादयितुमुपास्यमानः प्रवणो भवेदित्यर्थः। एवमव्याख्याने दृष्टान्तदार्ष्टान्तिकयोरनन्वयापत्तेः। नच लौकिकगीतादिनैव रामाभिमुखीकरणं साधयितुं शक्यम्,

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥

इति नियमात्। क्वचित्तथा दर्शनेऽपि तस्य काकतालीयतैवाऽवगन्तव्या। जन्मान्तरसहस्रानुष्ठितश्रवणादिपरिपाकस्यैव साक्षात्कारहेतुत्वस्यैवावश्याश्रयणीयत्वात्। अन्यथोदाहृतवाक्यस्योन्मत्तप्रलपितत्वापत्तेः॥ ३॥

अथ वक्ष्यमाणपूजाङ्गतया बीजादिन्यासमाह—बीजेति।

**बीजशक्ती न्यसेद्दक्षवामयोः स्तनयोरपि॥**
**कीलं मध्ये विना भाव्यः स्ववाञ्छाविनियोगतः॥४॥**

दक्षो—दक्षिणः बीजमाद्यक्षरम् शक्तिरन्त्यमक्षरद्वयम्। कीलं मध्यगतमक्षरत्रयम्, तत् मध्ये—स्तनद्वयान्तराले न्यसेत्। विना—बीजशक्तिभ्यां पृथक्त्वेन भाव्यो—भावनीयो ज्ञातव्यः। अन्यथा कीलकाद्यपरिज्ञाने सकीलको मन्त्रः फलदो न स्यादित्यर्थः।

अथवा 'अविने'त्यकारप्रश्लेषेण पदं छित्वा (१) व्याख्यातव्यम्। अविना—अपृथक्त्वेन बीजशक्तिमध्यवर्तितया तत्संश्लिष्टत्वेन भाव्य—उपासनीयः। विनियोगमन्तरेण मन्त्रस्य फलदत्वं न स्यादिति विनियोगमाह—स्ववाञ्छेति। अस्य मन्त्रस्य वाञ्छितार्थे विनियोग इत्याकारेण वचनोच्चारणं कर्तव्यमित्यर्थः॥ ४॥

बीजशक्त्यादिन्यासकल्पनायाः प्राकरणिकराममन्त्रमात्रसम्बन्धित्वं वाक्येन बाधमान आह—सर्वेषामेवेति।

सर्वेषामेव मन्त्राणामेष साधारणः क्रमः॥
अत्र रामोऽनन्तरूपस्तेजसा वह्निना समः॥ ५॥

क्रमः—परिपाटी, प्रकार इति यावत्।

'विना मन्त्रेण चेत्पूजा देवता न प्रसीदति'

इति पूजाङ्गत्वेन प्रागीरितं मन्त्रमुद्धरिष्यन् पूजनीयस्य रामस्य स्वरूपं परिवारं स्तुतिं चरित्रं च चतुस्त्रिंशत्कण्डिकाभिराह—अत्र राम इत्यादि, एवमुद्देशत इत्यन्तम्। अत्र—जडात्मके प्रपञ्चे रामः—पुरुषः सीतया—प्रकृत्या सहितो भाति—प्रकाशते। अमुमर्थं दृष्टान्तेन स्पष्टयति। दृष्टान्तप्रदर्शनप्रसञ्जितपरिच्छेदं वारयति—अनन्तरूप इति। तस्याग्नीषोमात्मकत्वमाह—तेजसेत्यादिना चेदित्यन्तेन। इह समशब्दोऽभेदवाची, नतु सादृश्यवाची। एकजातीयत्वविवक्षया समानजातीये समान-

---

(१) पट्टं स्थित्वा—इति मूलपुस्तके।

जातीयमिति प्रयोगदर्शनात् । अतो वह्निना समो वह्न्यात्मक इत्यर्थः । तदेवोपपादयति–तेजसेति । तेजोरूपत्वेनेत्यर्थः ॥५॥

स त्वनुष्णगुविश्वश्चेदग्नीषोमात्मकं जगत् ॥
उत्पन्नं सीतया भाति चन्द्रश्चन्द्रिकया यथा ॥ ६ ॥

तुशब्दोऽवधारणे । यो वह्निरूपः स एवेत्यर्थः । अनुष्णगुरूपः, अनुष्णाः–शीता, गावः–किरणा यस्य सोऽनुष्णगुः सोमः, सुधात्मक इत्यर्थः । रामेऽध्यस्तविश्वस्य रामाद्भेदाभावमभिप्रेत्याह–विश्व इति । एवमग्नीषोमात्मकश्चेत्तर्हि अवश्यं ततो रामादुत्पन्नं जगदग्नीषोमात्मकं भवितुमर्हतीत्याह–चेदित्यादिना ॥६॥

प्रकृत्या सीतया सहितत्वं प्रागीरितमनूद्याऽपूर्वं गुणान्तरं विधत्ते–श्याम इत्यादिना ।

प्रकृत्या सहितः श्यामः पीतवासा जटाधरः ॥
द्विभुजः कुण्डली रत्नमाली धीरो धनुर्धरः ॥ ७ ॥
प्रसन्नवदनो जेता धृष्ट्यष्टकविभूषितः ॥
प्रकृत्या परमेश्वर्या जगद्योन्याऽङ्किताङ्कभृत् ॥ ८ ॥
हेमाभया द्विभुजया सर्वालङ्कारया चिता ॥
श्लिष्टः कमलधारिण्या पुष्टः कोसलजाऽऽत्मजः ॥ ९ ॥

धृष्ट्यष्टकेति—धृष्टिप्रभृतयोऽष्टौ मन्त्रिणः परिवारत्वेन वक्ष्यमाणाः, तैर्विभूषित इत्यर्थः । पूर्वं सीतासाहित्यमात्रमुक्तम्, सम्प्रति तामपूर्वेण विशेषणेन विशेषयन् रामस्य प्रागनुक्तमेव

तद्विशिष्टप्रदेशत्वमाह–प्रकृत्येति । अत्राऽङ्कशब्दो वामाङ्कपरः । चिता–चिद्रूपयेत्यर्थः । पुष्टः–तदालिङ्गनादेवाऽऽनन्दतुन्दिल इत्यर्थः । कोसलजा–कौसल्या तदात्मजः–तत्पुत्रो राम इत्यर्थः ॥ ७–९ ॥

दक्षिणे लक्ष्मणेनाऽथ सधनुष्पाणिना पुनः ॥
हेमाभेनाऽनुजेनैव तदा कोणत्रयं भवेत् ॥ १० ॥

सधनुष्पाणिना–धनुषा सह वर्तत इति सधनुः पाणिर्यस्य तेन । अनुजेनैवेत्येवकारः समुच्चये । तदेति–यदा श्रीरामसीतालक्ष्मणास्त्रयो निर्दिष्टाः, तदाऽऽश्रयत्वेन कोणत्रयं–त्रिकोणं भवेत् । त्रिकोणस्य योन्याकारतया जगत्कारणता सूचिता भवति । नच रामस्य जगत्कारणतामुक्त्वा सम्प्रति त्रिकोणस्य तथात्वोक्तौ विरोध इति वाच्यम्, त्रिकोणस्य यन्त्रान्तर्गतत्वेन श्रीरामशरीरत्वात् । नहि देवदत्तादेश्चेतनस्य पुत्रादिकारणत्वोक्तौ तच्छरीरस्य तत्कारणता विरुध्यते ॥ १० ॥

रामस्येव लक्ष्मणस्यापि पूजाङ्गमन्त्रोऽस्तीत्याह–तथैवेति ।

तथैव तस्य मन्त्रश्च यश्चाऽणुश्च स्वङेऽन्तया ॥
एवं त्रिकोणरूपं स्यात् तं देवा ये समाययुः ॥ ११ ॥

यथा रामस्य मन्त्रस्तथैव लक्ष्मणस्य मन्त्रोऽस्तीत्यन्वयः । लक्ष्मणमन्त्रमुद्धरति–यश्चेति । चकारो भिन्नक्रमः, सच क्रमो ज्ञापयिष्यते । योऽणुः–यो मन्त्रो लक्ष्मणसम्बन्धी, स्वङेऽन्तया–स्वशब्देन स्वबीजनामनी परामृश्येते, ङे इति चतुर्थ्येकवचनम्,

अन्तशब्दोऽत्र भावप्रधानः, स्वबीजनामचतुर्थ्यन्तत्वेन । प्रथमचकारान्नमोऽन्तत्वेन, ज्ञातव्य इति शेषः । द्वितीयचकारेण श्रीबीजपूर्वको नामचतुर्थीको वह्निजायान्तः सीतामन्त्रोऽपि सञ्चोयते । एवं रामाधिष्ठितं त्रिकोणमुपपाद्य निगमयति-एवमिति । ये इन्द्रादयो रावणपीडितास्ते त्रिकोणाधिष्ठातारं नारायणं शरणं प्रापुरित्याह-तं देवा इति ॥ ११ ॥

स्तुत्या विना न प्रसीदति प्रभुरित्यभिप्रेत्याह-स्तुतिमिति ।

स्तुतिं चक्रुश्च जगतः पतिं कल्पतरौ स्थितम् ॥
कामरूपाय रामाय नमो मायामयाय च ॥ १२ ॥

कल्पतरौ स्थितं-कल्पवृक्षस्याधःस्थितमित्यर्थः । कामरूपायेति, स्वेच्छारूपायेत्यर्थः । मायामयाय-त्रिगुणात्मकप्रकृतिप्रचुराय, मायायास्त्रिगुणात्मिकाया आमयाय-रोगरूपाय, रोगवद्विघातकायेत्यर्थः । सहि साक्षात्कृतः स्वमायां संहरति ॥ १२ ॥

नमो वेदादिरूपाय ॐकाराय नमो नमः ॥
रमाधराय रामाय श्रीरामायाऽऽत्ममूर्तये ॥ १३ ॥

वेदादिरूपाय, वेदानां-ऋगादीनां कारणात्मने । नत्वेतेषां पौरुषेयत्वमाशङ्कनीयम्, निश्वासन्यायेन तेषां तत आविर्भावाङ्गीकारात् । अत एव श्रुतिः-'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद' इत्यादि । भट्टपादा अपि—

'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता'

इति । वेदादिरूपाय ॐकारात्मकायेति न व्याख्यानं सुन्दरम्,

ॐकारायेत्यनन्तरमेवोक्तत्वात् । रमाधराय, रमा–लक्ष्मीः सीता तस्या वामाङ्के धरणात् धराय श्रीरामाय, श्रियं–सीतां रमयतीति श्रीरामस्तस्मै । आत्ममूर्तये इत्यनेन आत्मरूपता व्यावर्त्यते ॥ १३ ॥

जानकीदेहभूषाय रक्षोघ्नाय शुभाङ्गिने ॥
भद्राय रघुवीराय दशास्याऽन्तकरूपिणे ॥ १४ ॥

जानकीदेहभूषाय, जानकी–सीता देहभूषा–शरीरालङ्कारो यस्य तस्मै, जानकीदेहः सीताशरीरं भूषा यस्येति वा । भद्राय-मङ्गलाय ॥ १४ ॥

रामभद्र ! महेष्वास ! रघुवीर ! नृपोत्तम ! ॥
भो ! दशास्यान्तकाऽस्माकं रक्ष देहि श्रियं च ते ॥१५॥
त्वमीश्वर्या दापयाऽथ सम्प्रत्याश्वरिमारणम् ॥
कुर्विति स्तुत्य देवाद्यास्तेन सार्धं सुखं स्थिताः ॥१६॥

अस्माकं रक्षेति, अस्मान् रक्षेत्यर्थः । कर्मणि षष्ठीत्वम् । श्रियं–सम्पदं च देहीति । 'ते' इति तच्छब्दस्य स्त्रीलिङ्गस्य द्विवचनम् । ईश्वर्या–सीतया ते–रक्षाश्रियौ दापय । अथेति समुच्चये, अपिचेत्यर्थः । 'सम्प्रति–वर्तमाने रावणोपद्रवकाले आशु–शीघ्रं अरेः–शत्रो रावणस्य मारणं कुरु' इति देवाद्याः आदिशब्देन अन्या अपि देवयोनयः स्तुत्य–स्तुतिं कृत्वा । समासाभावेऽपि छान्दसो

ल्यप् । तेन सार्धं—परमेश्वरेण सहैव तत्परा भूत्वा सुखं—रावण-जनितं दुःखमननुसन्दधानाः स्थिताः ॥ १५ ॥ १६ ॥

स्तुवन्त्येवं हि ऋषयस्तदा रावण आसुरः ॥
रामपत्नीं वनस्थां यः स्वनिवृत्त्यर्थमाददे ॥ १७ ॥
स रावण इति ख्यातो यद्वा रावाच्च रावणः ॥
तद्व्याजेनेक्षितुं सीतां रामो लक्ष्मण एव च ॥ १८ ॥
विचेरतुस्तदा भूमौ देवीं संदृश्य चासुरं ॥
हत्वा कबन्धं शबरीं गत्वा तस्याज्ञया तया ॥१९॥

एवं—देवादिवत् ऋषयो—वसिष्ठाद्या अपि स्तुवन्ति-अस्तुवन् । लकारव्यत्ययश्छान्दसः । एवं देवादिभिः स्तुतौ कृतायां परितुष्टेन भगवता प्राचीनेषु बहुष्वपराधेषु सत्स्वपि नूतनमपराधमन्तरेण हन्तुमनौचित्यमिव भवतीति नूतनापराधकरणाय प्रेरितो दशास्यः सीतां जहार इति वदन्नेव रावणपदनिरुक्तिं द्विधा करोति—तदा रावण इति । असुर एव आसुरो—राक्षसः । रामपत्नीशब्दात् 'रा' इति वर्णं, वनस्थात् 'वन' इति वर्णद्वयं गृहीत्वा रावणशब्दो निष्पन्नः । रावात्—रावणात्, जगतो रोदनादित्यर्थः । तद्व्याजेन—हृतसीतान्वेषणमिषेण तदा—सीताहरणोत्तरकाले रामो लक्ष्मणश्च विचेरतुः । किं कर्तुं, सीतां देवीमीक्षितुम् । एवकारः सहायान्तरव्यवच्छेदनार्थः कबन्धमसुरं संदृश्य हत्वा तस्य—कबन्धस्य आज्ञया—वाचा नतु प्रसिद्धयाऽऽदेशरूपया । अल्पज्ञतया नीचस्य कबन्धस्य सर्वेश्वरौ-

तौ प्रति तदयोगात् । शबरीं गत्वा तया-शबर्या ॥ १७-१९ ॥

पूजितावीरपुत्रेण भक्तेन च कपीश्वरम् ॥
आहूय शंसता सर्वमाद्यन्तं रामलक्ष्मणौ ॥ २० ॥

पूजितौ रामलक्ष्मणौ भक्तेन—स्वकीयभक्तिभाजा ईर-पुत्रेण, ईरो—वायुः 'ईरयति प्रेरयती'ति व्युत्पत्तेः, तस्य पुत्रेण—हनुमता द्वारभूतेन कपीनामीश्वरं—सुग्रीवमाहूय सर्वं वृत्तान्तं आद्यन्तम्, अत्र आङ् अनुसन्धातव्यः, आद्यन्तावभिव्याप्ये-त्यर्थः । शंसताम्—अशंसताम्, उक्तवन्तौ । छान्दसोऽडागमा-भावः ॥ २० ॥

स तु रामे शङ्कितः सन् प्रत्ययार्थं च दुन्दुभेः ॥
विग्रहं दर्शयामास यो रामस्तमचिक्षिपत् ॥ २१ ॥

स तु-कपीश्वरः रामे विषये शङ्कितः-'वालिवधरूपं महत्कार्यं कर्तुं क्षमो नवे'ति सञ्जातशङ्कः सन् प्रत्ययार्थं च-जिघांसितस्य वालिनोऽशक्यवधत्वे प्रतीतिं श्रीरामस्य चेत-स्युत्पादयितुम् अन्याऽनिष्पेषणीयं वालिना निष्पिष्टं दुन्दु-भेर्दैत्यस्य विग्रहं—शरीरमस्थिकूपविशेषं महाशैलप्रायं दर्शया-मास । स इत्यध्याहर्तव्यम्, तथाच, यो रामः स तं-दुन्दु-भिविग्रहं अचिक्षिपत्-अक्षिपत्, दशयोजनमित्यर्थः । अत्र णिच् अविवक्षितः, स्वार्थिको वा चौरादिकत्वात् ॥ २१ ॥

सप्त तालान् विभिद्याशु मोदते राघवस्तदा ॥
तेन हृष्टः कपीन्द्रोऽसौ स रामस्तस्य पत्तनम् ॥२२॥

मोदते—अमोदत । भूतार्थे लट् छान्दसः । तदा—(१) तालभेदाऽनन्तरकाले तेन—शरीरक्षेपादिना तस्य—वालिनः पत्तनं—नगरं किष्किन्धोपलक्षितम् ॥ २२ ॥

जगामाऽगर्जदनुजो वालिनो वेगतो गृहात् ॥
वाली तदा निर्जगाम तं वालिनमथाहवे ॥ २३ ॥

अनुजः सुग्रीवः ॥ २३ ॥

निहत्य राघवो राज्ये सुग्रीवं स्थापयेत्ततः ॥
हरीनाहूय सुग्रीवस्त्वाह चाऽऽशाविदोऽधुना ॥ २४ ॥
आदाय मैथिलीमद्य ददताऽऽश्वाशु गच्छत ॥
ततस्ततार हनुमानब्धिं लङ्कां समाययौ ॥ २५ ॥

ततो—वालिवधानन्तरं स्थापयेत्—अस्थापयत् । लुङि कर्तव्ये लिङ् छान्दसः । सुग्रीवस्तु हरीन्—वानरान् आहूय आह च—उक्तवान् । किमाह आशाविदो—दिशां ज्ञातारो वानराः ! अधुना—सम्प्रत्येव अस्मिन्नेव क्षणे, एकस्मिन क्षणे नानादिग्गमनसीतादर्शनतदानयनादि न घटत इत्याह—आश्विति । आश्वाशु—शीघ्रं शीघ्रम् । वीप्सा वेगातिशयप्रकाशनार्था ॥ २४-२५ ॥

सीतां दृष्ट्वाऽसुरान् हत्वा पुरं दग्ध्वा तथा स्वयम् ॥
आगत्य रामेण सह न्यवेदयत तत्त्वतः ॥ २६ ॥

असुरान्—राक्षसादीन् तत्त्वतो—याथातथ्येन ॥ २६ ॥

---

( १ ) अत्र 'कबन्धशरीरे' इत्यधिकं मूलपुस्तके ।

तदा रामः क्रोधरूपी तानाहूयाऽथ वानरान् ॥
तैः सार्धमादायास्त्रांश्च पुरीं लङ्कां समाययौ ॥ २७ ॥

क्रोधरूपी, क्रोधेन रावणदुर्विनयश्रवणजनितेन रूपी-स्वाभाविकाद्रूपाद्विपरीतरूपविशिष्टः ॥ २७ ॥

तां दृष्ट्वा तदधीशेन सार्धं युद्धमकारयत् ॥
घटश्रोत्रसहस्राक्षजिद्भ्यां युक्तं तमाहवे ॥ २८ ॥

तां -पुरीम्, अकारयत्-अकरोत्, णिचोऽविवक्षितत्वात् । अथवा नरैरकारयदित्यदोषः । घटश्रोत्रः-कुम्भकर्णः सहस्राक्षजित्-इन्द्रजित् तं-रावणम् ॥ २८ ॥

हत्वा, विभीषणं तत्र स्थाप्याऽथ जनकात्मजाम् ॥
आदयाऽङ्कस्थितां कृत्वा स्वपुरं तैर्जगाम ह ॥ २९ ॥

तत्र-रावणस्थाने स्थाप्य-स्थापयित्वा । समासाभावेऽपि ल्यप् छान्दसः । अङ्कस्थितां कृत्वा, पातिव्रत्याऽऽवेदकेन दुष्करेणाग्निप्रवेशकर्मणा भगवतः परितोषात् । तैरिति सहार्थे तृतीया, विभीषणसुग्रीवादिभिः साकमित्यर्थः ॥ २९ ॥

ततः सिंहासनस्थः सन् द्विभुजो रघुनन्दनः ॥
धनुर्धरः प्रसन्नात्मा सर्वाभरणभूषितः ॥ ३० ॥

सिंहासनस्थः, भरतेन राज्यसमर्पणात् । धनुर्धरः-धनुरुपलक्षितः, नतु धनुर्विशिष्ट एव । द्वयोर्भुजयोर्वस्त्वन्तराऽवरोधस्य वक्ष्यमाणत्वात् ॥ ३० ॥

मुद्रां ज्ञानमयीं याम्ये वामे तेजःप्रकाशनम् ॥
धृत्वा व्याख्याननिरतश्चिन्मयः परमेश्वरः ॥ ३१ ॥

मुद्रामिति । याम्ये–दक्षिणे भुजे ज्ञानमुद्रां धृत्वा । 'अङ्गुलित्रयं प्रसार्य हृदयाभिमुखमवस्थापितया तर्जन्याऽङ्गुष्ठसंयोगो' ज्ञानमुद्रा । वामे भुजे तेजःप्रकाशनं–बलप्रकटनं धृत्वा, वामजानुमण्डलं वामभुजया बलेनाऽऽपीड्येत्यर्थः ॥ ३१ ॥

उदग्दक्षिणयोः स्वस्य शत्रुघ्नभरतौ धृतः ॥
हनुमन्तं च श्रोतारमग्रतः स्यात्त्रिकोणगम् ॥ ३२ ॥

उदग्दक्षिणयोः–वामदक्षिणभागयोः धृतः–धारितवान् । धृधातोर्धारणार्थेऽपि स्मरणात्, 'धृङ् अवस्थाने धारणे चे'ति । अग्रतो हनुमन्तं च, धृतः इत्यनुषञ्जनीयम् । एवं वक्ष्यमाण-षट्कोणावयवभूतं त्रिकोणमुपपाद्योपसंहरति—स्यात्त्रिकोणग-मिति ॥ ३२ ॥

षट्कोणावयवभूतं त्रिकोणान्तरं निरूपयति—भरताध इति ।

भरताऽधस्तु सुग्रीवं शत्रुघ्नाऽधो विभीषणम् ॥
पश्चिमे लक्ष्मणं धृत्वा धृतच्छत्रं सचामरम् ॥ ३३ ॥
तदधस्तौ तालवृन्तकरौ त्र्यस्रं पुनर्भवेत् ।
एवं षट्कोणमादौ स्वदीर्घाङ्गैरेष संयुतः ॥ ३४ ॥

द्वितीयं वासुदेवाद्यैराग्नेयादिषु संयुतम् ॥
तृतीयं वायुसूनुं च सुग्रीवं भरतं तथा ॥ ३५ ॥
विभीषणं लक्ष्मणं च अङ्गदं चाऽरिमर्दनम् ॥
जाम्बवन्तं च तैर्युक्तस्ततो धृष्टिर्जयन्तकः ॥ ३६ ॥
विजयश्च सुराष्ट्रश्च राष्ट्रवर्धन एव च ॥
अकोपो धर्मपालश्च सुमन्त्रस्त्वेभिरावृतः ॥ ३७ ॥

तदधः—भरतशत्रुघ्नयोरधः तौ—सुग्रीवविभीषणौ ताल-वृन्तकरौ—व्यजनहस्तौ । व्यस्रं पुनरिति, अन्यत्रिकोण-मित्यर्थः । एवं त्रिकोणद्वयस्य मेलने षट्कोणं, भवेदित्यनुष-ज्यते । एवं श्रीराममन्त्रोद्दिधीर्षया षट्कोणयन्त्रैकदेशो निरूपितः । अग्रे च एतमेवैकदेशमनूद्य यन्त्रं निःशेषतया वर्तते । तत्र पूज्यस्य रामस्य पौर्वापर्येणाऽङ्गाद्यावरणान्याह—आदावित्यादिना । स्वदीर्घाङ्गैरिति, स्वं—स्वकीयं बीजं 'रेफ आकारो बिन्दु'रित्यक्षरसमुदायात्मकं, तेन योजितानि यद्दी-र्घाण्यक्षराणि 'आं ईं ऊं ऐं औं अः' इत्येवंरूपाणि तैर्युक्तानि अङ्गानि हृदयादीनि तैः संयुतः श्रीरामः पूज्य इति वक्ष्यमाणेन सम्बध्यते । अङ्गानां पूज्यस्थानक्रमः श्रीशङ्कराचार्यै-रभिहितः—

हृदयं सशिरस्तथा शिखां कवचं चेत्यनलादिदिक्षु तु(१) ।

(१) दिक्षुषु—इति मूलपुस्तके ।

पुरतो नयनत्रयं क्रमात्पुनरस्त्रं च समर्चयेत्क्रमात् ॥

अत एव वक्ष्यमाणाग्नेयादि सिंहावलोकनन्यायेनात्रापि सम्बध्यते । अत्र यद्यपि वासुदेवाद्यावरणं द्वितीयमुक्तम्, तथापि आत्मादिचतुष्टयं सशक्तिकं द्वितीयं बोध्यम् । अगस्तिसंहितायां तस्यैव द्वितीयावरणत्वेनोक्तत्वात् ।

आत्मान्तरात्मपरमज्ञानात्मभ्योऽग्नितः क्रमात् ।
निवृत्त्यै च प्रतिष्ठायै विद्यायै ते नमाम्यहम् ।
शान्त्यै चात्मादिशक्तित्वे स्थित्यैतद्रूपिणे नमः ॥

इति । नचास्यार्थस्योपपादकाभावः, गुणोपसंहारन्यायस्यैव तथात्वात् । नन्वेवं वासुदेवादीनां तृतीयावरणत्वे द्वितीयशब्दविरोधः । मैवम्, तृतीयेऽपि द्वितीयापेक्षया द्वितीयशब्दोपपत्तेः । एवं चतुर्थेऽपि हनुमदाद्यावरणत्वे तृतीयशब्दोपपत्तिः । ननु स्मृतिस्थमतिरिक्तमङ्गं श्रुतेर्न्यूनोक्तित्वपरिहाराय कथमुपसंह्रियते ? श्रुत्यपेक्षया स्मृतेर्दुर्बलत्वात् । मैवम्, स्मृत्यनुमितश्रुतिस्थस्यैवोपसंह्रियमाणतयाऽस्याक्षेपस्याऽनवकाशत्वात् । ननु स्मृत्यनुमिताऽपि श्रुतिः प्रत्यक्षश्रुतितो दुर्बलैवेति चेत्सत्यम्, तथापि श्रुत्यभिहितमर्थमनवबाधमानैव तत्स्मृतिस्तदनुमितश्रुतिर्वा गुणोपसंहारन्यायेन सहायार्थश्रुतौ निविशमानाऽनुमन्येत । को दोषः । वासुदेवाद्यैरित्यादिशब्देन सङ्कर्षणप्रद्युम्नाऽनिरुद्धाः श्रीशान्तिप्रीतिरतयश्च गृह्यन्ते । अरिमर्दनं-शत्रुघ्नं तैः-वायुसून्वादिभिः । पञ्चमावणमाह-ततो धृष्टिरिति ॥ २३-२७ ॥

षष्ठमाह—ततः सहस्रेति ।

ततः सहस्रदृग्वन्हिधर्मरक्षोवरुणाऽनिलाः ॥
इन्द्वीशधात्रनन्ताश्च दशभिस्त्वेभिरावृतः ॥ ३८ ॥

सहस्रदृक्–इन्द्रः रक्षो–निर्ऋतिः, अक्षराधिक्यं छान्दसम् । अनिलो–वायुः इन्दुः–सोमः धाता–ब्रह्मा अनन्तः–शेषः ॥३८॥

सप्तममाह—बहिरिति ।

बहिस्तदायुधैः पूज्यो नीलादिभिरलङ्कृतः ॥
वसिष्ठवामदेवादिमुनिभिः समुपासितः ॥ ३९ ॥

तदायुधैः—इन्द्राद्यस्त्रैर्वज्रादिभिः । अष्टमं नीलादिभिरिति । नवमं वसिष्ठेति । ध्रुवाद्यावरणान्यस्योद्धरिष्यमाणस्यानुरोधेन बोध्यानि । तत्र द्वात्रिंशद्दले ध्रुवादिध्यानस्य विहितत्वात् । एषामावरणानां स्थाननियमः सम्प्रदायानुसारादवगन्तव्यः ॥३९॥

उक्तमुपसंहरति—एवमिति ।

एवमुद्देशतः प्रोक्तं निर्देशस्तस्य चाधुना ॥
त्रिरेखापुटमालिख्य मध्ये तारद्वयं लिखेत् ॥ ४० ॥

यन्त्रैकदेशस्वरूपं उद्देशतः—'षट्कोण'मिति नामकीर्तनेन प्रोक्तम् । यन्त्रविशेषकथनं प्रतिजानीते—निर्देश इति । क्रियत इति शेषः । इदानीं यन्त्रविशेषं साऽक्षरविन्यासमुद्धरिष्यन्नुक्तं षट्कोणलक्षणं यन्त्रैकदेशमनूद्य तत्राक्षरादिलेखनं विधत्ते—त्रिरे-

खेति । त्रिरेखापुटं षट्कोणमालिख्य पूर्वोक्तरीत्या, तारः-प्रणवः ॥ ४० ॥

तन्मध्ये बीजमालिख्य तदधः साध्यमालिखेत् ॥
द्वितीयान्तं च तस्योर्ध्वे षष्ठयन्तं साधकं तथा ॥ ४१ ॥

तन्मध्ये बीजम्, तदधो-बीजाधोभागे साध्यं-साधनीयमर्थं द्वितीयान्तं-द्वितीयविभक्त्यन्तम्, तस्य-बीजस्य ऊर्ध्वे-उपरिभागे षष्ठयन्तम् ॥ ४१ ॥

कुरुद्वयं च तत्पार्श्वे लिखेद्बीजान्तरे रमाम् ॥
तत्सर्वं प्रणवाभ्यां च वेष्टयेच्छुद्धबुद्धिमान् ॥ ४२ ॥

तत्पार्श्वे, बीजस्य पार्श्वयोरित्यर्थः । बीजान्तरे-तस्यैव बीजस्योदरे रमां—श्रीबीजं तत्सर्वं साध्यादिसहितं बीजं प्रणवाभ्यां परस्परसंमुखाभ्याम् ॥ ४२ ॥

दीर्घभाजि षडस्रेषु लिखेद्बीजं हृदादिभिः ॥
कोणपार्श्वे रमामाये तदग्रेऽनङ्गमालिखेत् ॥ ४३ ॥

दीर्घभाजि-आकारादिषड्दीर्घयुक्तं हृदयादिभिः-हृदयशिरःशिखाकवचनेत्रास्त्रैः । तत्रास्त्रं पृष्ठतः, नतु चतुर्दिशं पूजायामिव । रमामाये-श्रीबीजभुवनेश्वरीबीजे तदग्रे—कोणाग्रे अनङ्गं-कामबीजम् ॥ ४३ ॥

क्रोधं कोणाग्रान्तरेषु लिखेन्मन्त्र्यभितो गिरम् ॥
वृत्तत्रयं साऽष्टपत्रं सरोजे विलिखेत् स्वरान् ॥ ४४ ॥

केसरे चाऽष्टपत्रे च वर्गाष्टकमथाऽऽलिखेत् ॥
तेषु मालामनोर्वर्णान् विलिखेदूर्मिसंख्यया ॥ ४५ ॥

क्रोधं—कवचबीजं कोणाग्रान्तरेषु, कोणानां यान्यग्राणि तेषामन्तरेषु—आभ्यन्तरभागेषु लिख्य—लिखित्वा । असमासेऽपि छान्दसो ल्यप् । अभितः—सर्वतः—गिरं—वाग्भवं वृत्तत्रयं-तिस्रो वर्तुलाकारा रेखाः साष्टपत्रं—अष्टदलसहितम् । एतच्च वृत्तत्रयस्य विशेषणम्, वृत्तत्रयं साष्टपत्रं लिखेदित्यर्थः । सरोजे—अष्टदले कमले केसरे—केसरस्थाने स्वरान् अकारादीन् पूर्वक्रमेण प्रतिदलमूलं युग्मशो लिखेत् । अष्टपत्रे—अष्टानां पत्राणां मध्ये वर्गाष्टकं—कचटतपयशलवर्गानष्टौ लिखेत् । तेष्वपि—पत्रेषु मालामनोर्वर्णान् लिखेत् ऊर्मिसंख्यया-षड्गणनया ॥ ४४–४५ ॥

अन्ते पञ्चाऽक्षरानेवं पुनरष्टदलं लिखेत् ॥
तेषु नारायणाऽष्टार्णं लिख्य तत्केसरे रमाम् ॥ ४६ ॥

अन्ते—अन्तिमदले पञ्चाक्षरान् लिखेत् । एवं—अनेन प्रकारेण पुनरष्टदलम्, अष्टपत्रान्तरमित्यर्थः । तेषु—अष्टसु पत्रेषु नारायणाष्टार्णं यथासंख्यं लिख्य, लिखित्वेत्यर्थः । तत्केसरे—द्वितीयाष्टपत्रकेसरस्थाने रमां-श्रीबीजं केसरवदेव नैरन्तर्येण लिखेत् ॥ ४६ ॥

तद्बहिर्द्वादशदलं विलिखेद् द्वादशाक्षरम् ॥
तथों नमो भगवते वासुदेवाय इत्ययम् ॥ ४७ ॥

तद्बहिः—द्वितीयाष्टदलाद्बहिः द्वादशदलं विलिखेत् द्वादशाक्षरं—ॐ नमो भगवते पद्माभाष्य वासुदेवाय इत्यपि। द्वादशाक्षरमुद्धरति—तथोमिति ॥ ४७ ॥

आदिक्षान्तान् केसरेषु वृत्ताकारेण संलिखेत् ॥
तद्बहिः षोडशदलं लिखेत्तत्केसरे ह्रियम् ॥ ४८ ॥

आदिक्षान्तान् चतुःसंख्यया प्रतिपत्रं लिखित्वाऽवशिष्टमक्षरद्वयमन्त्यदले। एवं तद्बहिः—द्वादशदलाद्बहिः षोडशदलं लिखित्वा वृत्ताकारेण केसरवत् सम्यग्लिखेत्। तत्केसरे—षोडशदलकेसरे ह्रियं—भुवनेश्वरीबीजम् ॥ ४८ ॥

वर्माऽस्त्रनतिसंयुक्तं दलेषु द्वादशाक्षरम् ॥
तत्संधिष्वीरजादीनां मन्त्रान् मन्त्री समालिखेत् ॥ ४९ ॥

वर्म—हुंकारः अस्त्रं—फट्कारः नतिः—नमःशब्दः, तद्युक्तं द्वादशाक्षरं षोडशाक्षरं भूत्वा(?)प्रतिपत्रमेकैकाक्षरक्रमेण लिखेत्। तत्सन्धिषु—तेषां षोडशानां दलानां सन्धिमार्गेषु ईरजादीनां, ईरयति प्रेरयतीति ईरो—वायुस्तस्माज्जातः ईरजः—हनुमान् स आदिर्येषां ते ईरजादयः तेषां मन्त्रान्—बीजानि ॥ ४९ ॥

तान्येव दर्शयति—हमित्यादिना।

हं सं भं वं लं शं जं चाऽऽलिखेत्सम्यक् ततो बहिः ॥
द्वात्रिंशारं महापद्मं नादबिन्दुसमायुतम् ॥ ५० ॥

चकाराद्बीजम्। लमिति लक्ष्मणबीजादुपरितनम्, धृष्टया-

घष्टमन्त्रिणां धमित्यादिबीजानि च गृह्यन्ते। समालिखेत्, सम्यक्—स्पष्टतया आसमन्तालिलखेत्।

तत्सन्धिष्विन्द्रवज्रादिवर्णान् मन्त्री समालिखेत्।
तद्बहिस्त्वीरजादीनां बीजान्यालिख्य तत्त्ववित्॥

इति पाठे तस्य—षोडशदलस्य बहिः—ईरजाग्रे ह्मित्यादीनि बीजान्यालिख्य तत्सन्धिषु—षोडशदलानां सन्धिषु इन्द्रवज्रादिवर्णान्—इन्द्रवर्णान् वज्रादीनां वर्णान् लमित्यादीनि बीजानि मन्त्री—उपासकः समालिखेदिति योज्यम्। तत्त्वविदिति, गुरोर्लब्धभान इत्यर्थः। ततो बहिः—षोडशदलाद्बहिः द्वात्रिंशारं—द्वात्रिंशत्पत्रं महापद्मम्। अत्र चाष्टदलद्वादशदलापेक्षया महत्त्वम्, महामन्त्रलेखनयोगाद्वा। नादः—प्रणवस्य चतुर्थावयवः बिन्दुः—पञ्चमः, ताभ्यां समायुत++++मिति पाठे नादबिन्दुस्थाने मायादिबीजं लिखेदित्यर्थः॥ ५०॥

विलिखेन्मन्त्रराजार्णांस्तेषु मन्त्री प्रयत्नतः॥
ध्यायेदष्ट वसूनेकादश रुद्रांश्च तत्र वै॥ ५१॥

तेषु—द्वात्रिंशत्पत्रेषु मन्त्रराजार्णान् विलिखेत् सम्यक्। वसून्—ध्रुवं धरं सोमं आपोऽनिलमनलं प्रत्यूषं प्रभासं चाष्टौ, रुद्रान्—वीरभद्रं शम्भुं गिरिशं अजैकपादं अहिर्बुध्न्यं पिनाकिनं भुवनाधीश्वरं कपालिनं दिक्पतिं स्थाणुं भगम् एवमेकादश रुद्रान्॥ ५१॥

द्वादशेनांश्च धातारं वषट्कारं च तद्बहिः॥
भूगृहं वज्रशूलाढ्यं रेखात्रयसमन्वितम्॥ ५२॥

आदित्यान्—वरुणं सूर्यं वेदाङ्गं भानुं इन्द्रं रविं गभस्तिमन्तं यमं(१) स्वर्णरेतसं दिवाकरं मित्रं विष्णुम् द्वादश, धातारं चेति द्वात्रिंशद्देवान् ध्यायेत् । द्वात्रिंशद्दलेषु ध्यानपूर्वकं लिखित्वा पूजयेदित्यर्थः । तत्र नृसिंहानुष्टुभं रामानुष्टुभं सम्प्रदायानुरोधेन लेख्यमिति केचित् । तद्बहिः—द्वात्रिंशद्दलाद्बहिर्भागेषु पुरतो वषट्कारं पूजयेत् । भूगृहं—चतुरस्रं रेखाः—सत्त्वरजस्तमआत्मिकास्तासां त्रयम् ॥ ५२ ॥

द्वारोपेतं च राश्यादिभूषितं फणिसंयुतम् ॥
एवं मण्डलमालिख्य तस्य दिक्षु विदिक्षु च ॥५३॥
नारसिंहं च वाराहं लिखेन्मन्त्रद्वयं तथा ॥
कूटरेफाऽनुग्रहेन्दुनादशक्त्यादिभिर्युतः ॥ ५४ ॥

राश्यादि, राशयो मेषाद्याः । आदिशब्देन वारादिः । फणिसंयुतं, अनन्तः वासुकिः तक्षकः कालपद्मः महापद्मः शङ्खः कुलिकः एतैः फणिभिः—सर्पैः संयुतं तस्य—मण्डलस्य दिक्षु—पूर्वादिषु—नारसिंहं—नरसिंहबीजं विदिक्षु—आग्नेयादिषु वाराहं—वराहबीजम् । नरसिंहबीजमुद्धरति कूटः—क्षकारः रेफो—राक्षरः अनुग्रह-औकारः । श्रीकण्ठादिन्यासेऽनुग्रहस्वरस्यौकार—देवतात्वात् । इन्दुः—बिन्दुः नादः—प्रवणस्य पञ्चमोऽवयवः शक्तिः—षष्ठः, आदिशब्देन शान्ताख्यः सप्तमः ॥ ५४ ॥

(१) गभस्तीवसं-इति आदर्शपुस्तके ।

योनृसिंहः समाख्यातो ग्रहमारणकर्मणि ॥
अन्त्याधीशवियद्बिन्दुनादैर्बीजं च शौकरम् ॥ ५५ ॥

नृसिंहः समाख्यातः-नृसिंहबीजमुक्तम् । ग्रहेति, ग्रहाणां-बालग्रहाणाम् । उपलक्षणमेतत् । अन्येषां भूतप्रेतादीनामपि मारणं-निराकरणं तस्य कर्मणि-व्यापारे । अन्त्येति, अन्त्यः अधीश-ॐकारो यस्य सोऽन्त्याधीशः । श्रीकण्ठादिन्यासे अधीशस्य ॐकारदेवतात्वात् । ईदृशो वियत्-हकारः शौकरं-वाराहम् ॥ ५५ ॥

उद्धृतं वाराहं स्पष्टयति-हुंकारमिति ।

हुंकारं चात्र रामस्य मालामन्त्रोऽधुनेरितः ॥
तारो नतिश्च निद्रायाः स्मृतिर्मेदश्च कामिका ॥५६॥

नच स्वरूपनिर्देशे सत्युद्धारो व्यर्थः, उद्धाराभावे पाक्षिकाऽशुद्धत्वप्रसङ्गात् । सम्प्रति राममालामन्त्रोद्धारं प्रतिजानीते-मालेति । तारः-प्रणवः नतिः-नमःशब्दः निद्रा-भकारः, कलान्यासे निद्राकलासम्बन्धित्वेन भकारस्योक्तत्वात् । निद्राया इति पञ्चमी आनन्तर्यार्थे । निद्राया अनन्तरं स्मृतिः-गकारः, पूर्ववदेव स्मृतिकलासम्बन्धितया गकारस्योक्तेः । मेदः-वकारः, धातूनां मध्ये मेदसो वकारसम्बन्धित्वात् । कामिका-तकारः, तकारस्य कामिकाख्यकलासम्बन्धित्वात् ॥ ५६ ॥

**रुद्रेण संयुता वन्हिमेधाऽमराविभूषिता ॥**
**दीर्घाक्रूरयुता ह्लादिन्यथो दीर्घा समानदा ॥ ५७ ॥**

सा च रुद्रेण—एकादशस्वरेण संयुता । वह्निरिति रेफः, रेफस्याग्निबीजत्वात् । मेधा—घकारः, तस्या घकारसम्बन्धात् । सा च अमरः—उकारस्तेन विभूषिता, मातृकान्यासे उकारस्याऽमरे-श्वरसम्बन्धात् । दीर्घा—नकारः, नकारस्य दीर्घाख्यकला-सम्बन्धात् । सा च क्रूरयुता । क्रूरः—अनुस्वारः, क्रूरस्या-नुस्वारमूर्तित्वात् । ह्लादिनी—दकारः, तस्या दकारसम्ब-न्धात् । दीर्घा—नकारः समानदा, मानदा—आकारस्तेन सह वर्तमाना ॥ ५७ ॥

**क्षुधा क्रोधिन्यमोघा च विश्वमप्यथ मेधया ॥**
**युक्ता दीर्घा ज्वालिनी च ससूक्ष्मा मृत्युरूपिणी॥५८॥**

क्षुधा—यकारः क्रोधिनी—रेफः, यरयोः क्षुधाक्रोधिन्या-ख्यकलासम्बन्धात् । अमोघा—क्षकारः, तस्याः क्षसम्बन्धात् । विश्वं—वासुदेवः, विश्वशब्दस्य 'विश्वं विष्णु'रित्यत्र वासुदेव-नामत्वात् वासुदेवस्य ओंकारस्य मूर्तित्वात् । अतो विश्वं—ओंकारः(१) मेधया युक्ता—घकारेण संयुक्ता, घकारस्य मेधास-

(१) आदर्शपुस्तके यद्यपि विश्वशब्दस्य ॐकारवाचकत्वमुक्तम्, तथापि अक्षराधिक्यभिया तन्नादरणीयम् । अन्यथा माला-मन्त्रस्य चतुस्त्रिंशदर्णत्वं व्याहन्येत । ओंकारवाचकत्वे तु—तस्य पूर्ववर्णेन क्षकारेण योगे सति सङ्गतार्थता च भवति । अत्रार्थे दीपिकाकारो नारायणोऽप्यनुकूलः ।

म्बन्धात् । दीर्घा-नकारः ज्वालिनी-वकारः, तस्य ज्वालिनीसम्बन्धात् । सूक्ष्मः-इकारस्तेन सहिता, सूक्ष्मस्येकारमूर्तित्वात् । मृत्युरूपिणी-शकारः, मृत्युरूपायाः कलायाः शकारसम्बन्धात् ॥ ५८ ॥

सप्रतिष्ठा ह्लादिनी त्वक् क्ष्वेलः प्रीतिश्च साऽमरा ॥
ज्योतिस्तीक्ष्णाऽग्निसंयुक्ता श्वेताऽनुस्वारसंयुता ॥५९॥

ह्लादिनी-हकारः सा च प्रतिष्ठया-आकारेण सहिता, प्रतिष्ठाख्यशक्तेः आकारसम्बन्धात् । त्वक्-यकारः, धातुषु त्वचो यकारसम्बन्धात् । क्ष्वेलो-विषं मकारः, विषस्य मकारसम्बन्धात् । प्रीतिः-धकारः, प्रीतिकलायास्तत्सम्बन्धित्वात् । सा च सामरा, अमरः-उकारस्तस्य तत्सम्बन्धात्, तेन सहिता । ज्योतिः-अग्निः रेफः तीक्ष्णा-पकारः सा च अग्निना-रेफेण संयुक्ता । श्वेता-सकारस्तस्यास्तत्सम्बन्धात्, सा च अनुस्वारेण संयुता ॥ ५९ ॥

कामिकापञ्चमो लान्तस्तान्तान्तो धान्त इत्यथ ॥
स सानन्तो दीर्घयुतो वायुः सूक्ष्मयुतो विषः ॥ ६० ॥

कामिका-तकारस्तस्यास्तत्सम्बन्धात्, तस्याः पञ्चमो-नकारः लान्तो-वकारः तान्तः-तस्यान्तस्थकारः तस्याप्यन्तो-दकारः धान्तो-नकारः सः सानन्तः अनन्त-आकारस्तत्सहितः, दीर्घयुतः दीर्घ-आकारस्तेन युक्तो वायुः-यकारः सूक्ष्म-इकारस्तेन युतो विषो-मकारः ॥ ६० ॥

कामिका कामिका रुद्रयुक्ताऽथोऽथ स्थिरा स ए॥
तापिनी दीर्घयुक्ता भूरनिलोऽनन्तगोऽनलः ॥ ६१ ॥
नारायणात्मकः कालः प्राणोऽम्भो विद्यया युतम् ॥
पीता रतिस्तथा लान्तो योन्या युक्तस्ततो नतिः ६२

कामिका—तकारः, पुनरपि कामिका—तकारः सा च रुद्रेण—एकादशस्वरेण युक्ता, अथोऽथेति प्रगृह्यसंज्ञाया अभावश्छान्दसः। स्थिरा—जकारः, जकारकलात्वात्तस्याः। 'स ए' इति च स्वरूपग्रहणम्। तापिनी—बकारः, लकारवद्धकारस्यापि तापिनीसम्बन्धात्। दीर्घयुक्ता भूः—(१) [दीर्घेण—आकारेण सहितो लः, लकारस्य पृथिव्यात्मकत्वात्। अनिलः—यकारः अनन्तः—आकारः तं प्राप्तोऽनलः—रेफः कालः—मकारः स च नारायणात्मकः—आकारस्वरेण युक्तः, नारायणस्य आकारमूर्तित्वात्। प्राणः—वायुः यकारः, यकारस्य वायुबीजत्वेनोक्तत्वात्। अम्भः—] उदकं वकारः विद्यया—इकारेण युतम्, पीता—षकारः रतिः—णकारः लान्तो—वकारो योन्या—एकारेण युतः, नतिः—नमःशब्दः॥ ६१-६२॥

सप्तचत्वारिंशदर्णो गुणान्तः स्रगणुस्त्वयम्॥
राज्याभिषिक्तस्य तस्य रामस्योक्तक्रमाल्लिखेत्॥६३॥

(१) लेखकप्रमादात् कश्चिदत्रत्योंऽशस्त्रुटितोऽस्तीति पूर्वापरपर्यालोचनया निश्चित्य तत्पूर्तये टीकान्तरसाहाय्येन नूतनोऽयं पाठः कोष्ठके सन्निवेशितः।

सप्तचत्वारिंशदर्णत्वं मध्ये सवर्णदीर्घलक्षणं सन्धिमकृत्वा सम्पादनीयम्। सन्धिमाश्रित्योद्धारस्तु व्याकरणानुरोधात्। गुणान्तः, गुणाः—सत्त्वरजस्तमांसि अन्तः—स्वरूपं यस्य, त्रिगुणात्मक इत्यर्थः। सात्त्विकादीनामुपासकानां सात्त्विकादिफलदातृत्वात्। स्रगणुः—मालामन्त्रः। तुशब्दो मन्त्रान्तरेभ्यो विशेषमाह। नायं मन्त्रो वनवासिनो रामस्य, किन्त्वभिषिक्तस्येत्याह—अयमिति(१)। यन्त्रलेखनप्रकारमुक्तमुपसंहरति—उक्तेति॥ ६३॥

शिष्यसंमुखीकरणतयोक्तं यन्त्रं प्रशंसति—इदमिति।

इदं सर्वात्मकं यन्त्रं प्रागुक्तमृषिसेवितम्॥
सेवकानां मोक्षकरमायुरारोग्यवर्धनम्॥ ६४॥
अपुत्रिणां पुत्रदं च बहुना किमनेन वै॥
प्राप्नुवन्ति क्षणात्सम्यगत्र धर्मादिकानपि॥ ६५॥

अत्र-अस्मिन्नेव जन्मनि धर्मादिकान्—धर्मार्थकामान् प्राप्नोति। अपिशब्दान्मोक्षो दृष्टान्तीक्रियते। अयमाशयः—रामोपासनस्य मोक्षसाधनत्वमित्येतदावश्यकम्। अतस्त्रिवर्गसाधनत्वं न स्यादिति शङ्का स्यात्, तदपनोदाय 'धर्मादिकानपी'त्यारम्भ इति॥ ६५॥

---

(१) मालामन्त्रस्तु एवम्—

ॐनमो भगवते रघुनन्दनाय रक्षोघ्नविशदाय मधुरप्रसन्नवदनाय अमिततेजसे बलाय रामाय विष्णवे नमः ४७।

इदं रहस्यं परममीश्वरेणाऽपि दुर्गमम् ॥

एवं यन्त्रं समालिख्य न देयं प्राकृते जने ॥६६॥

इति श्रीरामतापिनीये चतुर्थोपनिषत् ।

प्राकृतो जनः-पृथग्जनः । इतिशब्दश्चतुर्थोपनिषत्समाप्तौ ॥ ६६ ॥

इति श्रीरामचन्द्रचरणानुगृहीतपरमहंसपरिव्राजकाचार्य-आनन्दवनरचितायां श्रीरामपूर्वतापिनीय-टीकायां रामकाशिकायां चतुर्थोपनिषत्

समाप्ता ।

# अथ पञ्चमोपनिषत् ।

निर्गुणप्राप्तेः परमपुरुषार्थत्वात्तस्याश्च सगुणोपासनया सुलभत्वात्तदङ्गभूतायाश्च पूजाया मन्त्रसाध्यत्वान्मन्त्राऽनुद्धारे तदपरिज्ञानात्तत्परिज्ञानाय मन्त्रोद्धारेऽपि यन्त्रं विना पूजने देवताप्रसन्नताऽभावस्य शाब्दत्वात् पूजार्थं यन्त्रमुद्धृत्य सम्प्रति पूजाविधिमारभते—भूतादिकमित्यादिना ।

भूतादिकं शोधयेद् द्वारपूजां
कृत्वा पद्माद्यासनस्थः प्रसन्नः ॥
अर्चाविधावस्य पीठाधरोर्ध्व-
पार्श्वार्चनं मध्यपद्मार्चनं च ॥ १ ॥

भूतं—पृथिव्यादिपञ्चकम् । आदिशब्देन आत्मा लिङ्गं द्रव्यं क्षितिश्च गृह्यते । तच्छोधयेत् । तत्र—भूतशुद्धिः शोषणदहनप्लावनैः, आत्मशुद्धिः भगवदाराधनाविरुद्धविषयविरहः, उपास्यदेवतामूर्तिर्लिङ्गं तस्य शोधनं—पूर्वपूजानुलेपनाद्यपाकरणेन क्षालनम्, द्रव्यस्य—चन्दनपुष्पादेरर्चनसाधनस्य केशकीटाद्यपाकरणेन शोधनम्, क्षितेरङ्गमालिन्यादिना शुद्धिरिति बोध्यम् । प्रसन्नः—चित्तनैर्मल्यवान् द्वारपूजां—द्वारेषु चतुर्ष्वपि हि तद्देवतापूजां कृत्वा पञ्चकस्वस्तिकाद्यासनोपविष्टः भूतादिकं शोधयेदित्यन्वयः । अस्य—प्रकृतस्य रामस्य, अः—विष्णुः तस्येति वा । फलतस्त्वेक एवार्थः । अर्चाविधौ कर्तव्ये सति पीठाधरोर्ध्वपार्श्वार्चनम्—पीठस्या-

ऽधरभागाय नमः, पीठस्योर्ध्वभागाय नमः, पीठस्य पूर्वपार्श्वाय नमः, दक्षिणपार्श्वाय नमः, पश्चिमपार्श्वाय नमः इति पीठाधरादिपूजां मध्यपद्मार्चनं—पीठमध्यगतकमलार्चनम् ॥ १ ॥

कृत्वा मृदुश्लक्ष्णसुतूलिकायां
रत्नासने देशिकं चार्चयित्वा ॥
शक्तिं चाधाराख्यकां कूर्मनागौ
पृथिव्यब्जे स्वासनाऽधः प्रकल्प्य ॥ २ ॥

कृत्वा, पीठाद्बहिर्देवस्य वामभागे मृदुः—श्लक्ष्णा स्निग्धा या सुतूलिका—शोभना तूलपटी तां परिभाव्य तस्यां सिंहासनं भावयित्वा तत्र सिंहासने देशिकं—आचार्यं स्थितमनुध्यायाऽर्चयित्वा, आधाराख्यकां शक्तिं—आधारशक्तिं तदुपरि कूर्मं तस्मिन्नागं-शेषं तत्र पृथिवीं तस्यामब्जं—कमलं च प्रकल्प्य—कल्पयित्वा । शक्त्यादिकल्पनास्थानमाह—स्वेति । स्वाभिन्नत्वेन ध्यातः श्रीरामः स्वशब्दार्थः, तस्य यदासनं—पूजापीठम्, तस्याधः—अधरभागे ॥ २ ॥

विघ्नं दुर्गां क्षेत्रपालं च वाणीं
बीजादिकांश्चाऽग्निदिशादिकांश्च ॥
पीठस्याङ्घ्रिष्वेषु धर्मादिकांश्च
तत्पूर्वांस्तांस्तस्य दिक्ष्वर्चयेच्च ॥ ३ ॥

विघ्नं-गणेशं वाणीं-सरस्वतीं बीजानि-'गं दुं क्षं सं' तत्पूर्वकान् अग्निदिशादिकान्-आग्नेयनैर्ऋत्यवायव्येशानपूर्वकान् पीठस्य कोणचतुष्टयेऽर्चयित्वा, अग्न्यादिक्रोणक्रमेणैव धर्मादिकान्-धर्मज्ञानवैराग्यैश्वर्याणि अर्चयित्वा, तत्पूर्वकान्-अधर्माज्ञानावैराग्याऽनैश्वर्याणि दिक्षु-पूर्वादिदिक्चतुष्टये अर्चयेत् ॥३॥

मध्ये क्रमादर्कविध्वग्नितेजां-
स्युपर्युपर्यउमैरर्चितानि ॥
रजः सत्त्वं तम एतानि वृत्त-
त्रयं बीजाढ्यं क्रमाद्भावयेच्च ॥ ४ ॥

अर्कः-सूर्यः विधुः-सोमः, उपर्युपरीति । अर्कोपरि सोमस्तदुपरि अग्निरित्यर्थः । अउमैरिति । अकारोकारमकारैः प्रणवांऽशभूतैः । यदाहुराचार्याः—

'मध्ये तं तं (?) पद्ममस्मिश्च सूर्यं सोमं वह्निं तारवर्णैर्विभक्तिः'

इति । तारः-प्रणव ॐकारः । रजः सत्त्वं तमः, अत्र सत्त्वं रजस्तम इति व्युत्क्रमो ज्ञातव्यः । उपर्युपरि अर्चयेदित्यर्थः । एतानि-सत्त्वादीनि, वृत्तत्रयं मण्डलत्रयत्वेन भावयेत्, चकारादर्चयेच्च । बीजाढ्यं स्मरेदेतत्पूर्वकम् (?) ॥ ४ ॥

आशाव्याशास्वप्यथात्मानमन्त-
रात्मानं च परमात्मानमन्तः ॥

ज्ञानात्मानं चाऽर्चयेत्तस्य दिक्षु
मायाविद्ये ये कलापारतत्त्वे ॥ ५ ॥

अन्तः–कर्णिकामध्ये आशासु–पूर्वादिदिक्षु आत्मादीनर्चयेत्, व्याशास्वपि–विदिक्ष्वाग्नेयादिष्वपि तानेव पूजयेत् । तस्य-कमलस्य दिक्षु चतसृषु, मायेति–मायातत्त्वं विद्यातत्त्वं कलातत्त्वं पारतत्त्वं च पूजयेत् । परमेत्र पारम् ॥ ५ ॥

सम्पूजयेद्विमलादींश्च शक्ती-
रभ्यर्चयेद्देवमावाहयेच्च ॥
अङ्गव्यूहाऽनिलजाद्यैश्च पूज्य
धृष्ट्यादिकैर्लोकपालैस्तदस्त्रैः ॥ ६ ॥

विमलादींश्चेति–विमला उत्कर्षणी ज्ञाना क्रिया योगा चेयं पञ्चमी प्रह्वी सत्या ईशाना अनुग्रहाख्या नव शक्तीः पूर्वादिषु मध्ये चाऽर्चयेदित्यर्थः । आवाहयेच्च—आवाहनमुद्रयाऽऽवाहनं कुर्यात् । उपलक्षणमेतत्, स्थापनादीन्यपि तत्तन्मुद्रादिभिः कुर्यात् । चकारः श्रीरामस्य विहितपूजां समुच्चेतुम् । आवरणमाह—अङ्गेति, अङ्गानि—हृदयादीनि । व्यूहशब्देन आत्मादयो वासुदेवादयश्च सशक्तिका द्विधाऽप्युच्यन्ते । अनिलजाद्यैरिति, अनिलो–वायुस्तज्जो–हनूमान् तदादिभिरष्टभिः पूज्य—पूजयित्वा, धृष्ट्यादिकैर्मन्त्रिभिः षोडशभिः, लोकपालैरिन्द्रादिभिः तदस्त्रैः—इन्द्रायुधैर्वज्रादिभिः ॥ ६ ॥

वसिष्ठाद्यैर्मुनिभिर्नीलमुख्यै-

राराधयेद्राघवं चन्दनाद्यैः ॥

मुख्योपहारैर्विविधैश्च पूज्य

तस्मै जपादींश्च सम्यक्समर्प्य ॥ ७ ॥

नीलमुखैर्नीलप्रभृतिभिः षोडशभिर्वानरैः, चन्दनादिभिः आदिपदेन पुष्पादीनि । मुख्योपहारैः-श्रेष्ठैः पवित्रैर्नैवेद्यैः जपादीन्, पूजाध्यानादय आदिपदार्थः । अयं पूजाक्रमो रामार्चनचन्द्रिकायां सपरिकरः समाकलनीयः ॥ ७ ॥

पूजाङ्गध्यानमाह-एवंभूतमिति ।

एवंभूतं जगदाधारभूतं

रामं वन्दे सच्चिदानन्दरूपम् ॥

गदारिशङ्खाब्जधरं भवारिं

स यो ध्यायेन्मोक्षमाप्नोति सर्वः ॥ ८ ॥

अरि-चक्रं सुदर्शनाख्यं भवस्य संसारस्याऽरिं-शत्रुम् । ध्यानस्य तत्फलमाह- स य इति ॥ ८ ॥

उपपादितस्योपासनस्य फलं सनिदर्शनमाह-विश्वव्यापीति ।

विश्वव्यापी राघवोऽथो तदानी-

मन्तर्दधे शङ्खचक्रे गदाब्जे ॥

धृत्वा रमासहितः सावृतिश्च
सपत्तनः सानुजः सर्वलोकी ॥ ९ ॥

राघवः—रघुवंशे आविर्भूतो विष्णुः सावृतिः-परिवारसहितः सपत्तनः-सनगरवासी, सर्वलोकी सर्वलोकसहितः अन्तर्दधे-अनवच्छिन्नानन्दप्रकाशज्ञानात्मके स्वरूपेऽवस्थितः ॥ ९ ॥

तद्भक्ता ये लब्धकामांश्च भुक्त्वा
तथा पदं परमं यान्ति ते च ॥
इमा ऋचः सर्वकामप्रदाश्च
ये ते पठन्त्यमला यान्ति मोक्षम् ॥१०॥

इति श्रीरामतापिनीये पञ्चमोपनिषत् ।

तथा ये तद्भक्तास्तेऽपि लब्धकामांश्च परमेश्वरोपासनप्रभावप्रकाशात् अभीष्टान् भुक्त्वा परमं पदं यान्ति । श्रीरामोपासनप्रतिपादकानां 'चिन्मय' इत्यादीनामेतदन्तानामृचां पाठफलमाह-इमा इति । वीप्सा पञ्चमोपनिषत्समाप्तिद्योतनार्था । इतिशब्दो ग्रन्थपरिसमाप्त्यर्थः ॥ १० ॥

विश्वनाथनगरीव काशिका पावनी जयति रामकाशिका ।
वेदशीर्षवचनोपपादितं वस्तु हस्तफलवद्दिदृक्षती ॥
श्रीरामकाशिका कल्पलतिकाऽन्वेषिताऽन्वहम् ।
वर्धिता फलदा सम्यङ् नृणामानन्दकानने ॥

दृष्ट्वा मुक्तहरान् हरोऽपरिमितान् मुद्यन्नहं(?) कोपिकां
कुर्वन्न+मिवाङ्कगां वहति यो यस्मिन् शितोऽहर्निशम् ।
तस्मिन् काशिपुरे पुरारिनिलये स्वर्गङ्गयाऽलङ्कृते
टीकाऽऽनन्दवनेर्वने(?) विरचिता रामादिका काशिका(१) ॥

इति श्रीरामचन्द्रचरणानुगृहीतपरमहंसपरिव्राजकाचार्य-श्रीआनन्दवनविरचितायां श्रीरामपूर्वतापिनीय-टीकायां रामकाशिकायां पञ्चमोपनिषत् समाप्ता ।

---

॥ समाप्ता चेयं पूर्वतापिनी ॥

---

(१) दृष्ट्वा मुक्तहरान् हरोऽपरिमितान् मुह्यन्नुमां कोपिकां
कुर्वन्नङ्गमिवाऽङ्कगां वहति यो यस्मिन् स्थितोऽहर्निशम् ।
तस्मिन् काशिपुरे पुरारिनिलये स्वर्गङ्गयाऽलङ्कृते
टीकाऽऽनन्दवनेन तेन रचिता रामादिका काशिका ॥
अर्थानुसन्धानेन कथमपि कल्पितोऽयं पाठः।

॥ श्रीः ॥

॥ श्रीरामाय नमः ॥

# श्रीरामोत्तरतापिनी ।

## आनन्दवनकृतया आनन्दनिधिनामिकया टीकया सहिता ।



सत्यं तारकतत्त्वमोमिदमणु स्थूलं चतुष्पादकं

जाग्रत्स्वप्नसुषुप्तिगं स्मृतिवशाद्विश्वाद्यतीतं विभुम् ।

भ्रूनासान्त उपास्यमानममरैः स्तुत्यं तुरीयात्मकं

भक्तानुग्रहविग्रहं जनकजाजानिं भजे राघवम् ॥

यः शब्दे परिनिष्ठितोऽथ परमे ब्रह्मण्यतिन्यायतो

यत्कारुण्यसुधोदबिन्दुकणिका संसारसन्तापनुत् ।

यद्गाम्भीर्यमगाधमप्यनुचरैर्गाधं समाश्रीयते

तस्य श्रीगुरुराघस्य(१)चरणद्वन्द्वारविन्दं नुमः ॥

आसीद्वासिष्ठवंश्यो नृहरिरिति पुरा केशवाह्वस्य सूनु-

स्तस्मात् कृष्णाह्वयोऽभूद्धरणिसुरवरः पत्तने कुण्डिनाख्ये ।

तस्मात्सूनुर्गुणाब्धिः समजनि कमलाम्बः प्रभुत्वा(२)द्यतीना-

मानन्दाऽऽद्यः स रामोपनिषदि विदधे साधु टीकां वनाख्यः ॥

---

(१) तस्यास्तस्य गुरोरुदार०—इति खपु० पाठः ।

(२) प्रभूत्या यतीनां—इति खपु० ।

श्रीरामोत्तरतापिनीयविलसच्छ्रुत्यर्थसंशोधन-
व्याजेनाऽर्जितजन्मकोटिदुरितध्वंसानुवंशात् कृशा(?)।
टीका स्वात्महितार्थमेव विदुषां बोधाय सा नोच्यते
तत्क्षन्तव्यमनाथदीनपतिभिर्विस्मृत्य मे चापलम् ॥
आनन्दनिधिनाम्नीयं टीका प्रोद्भाव्यते मया।
रामचन्द्रमणिं प्राप्य कर्तुं साम्राज्यमद्वयम् ॥

इह खलु सकलप्राणभृतां सुखार्थित्वं दुःखानर्थित्वं च ध्यायमानत्वात् सुखोपादित्सादुःखजिहासयोरनिवारितप्राप्तौ कश्चित् कृतसुकृतनिचयखचितचरमकलेवरकमनीयतयाऽवश्यंभाविदुःखाऽविनाभूतत्वेनाऽनित्यत्वेन (१)सातिशयत्वेन च विषयजनितं सुखं दुःखमेवेति मत्वा सकलसंसारादत्यन्तोपरमपरो भवति। उपरतः सन् संसारोच्छित्तिहेत्वन्वेषणं (२)करोति। संसारस्य च ब्रह्मात्मैकत्वापरिज्ञानविलसितत्वाद्ब्रह्मात्मैकत्वज्ञानेनैव तस्योच्छेदसम्भवात् रमणीयतरश्रीरामब्रह्मविद्यासिषाधयिषया श्रीरामोत्तरतापिनीयोपनिषत्सगुणोपासनफलभूतनिर्गुणश्रीरामोपासनतत्परतया प्रवर्तते(३)। यद्यप्यत्रोपनिषत्पदस्य 'उपनि'पूर्वात्सदेर्निष्पन्नस्यैव मुख्यया वृत्त्या श्रीरामब्रह्मविद्यापरत्वम्, तथापि लक्षणया वृत्त्या ब्रह्मविद्यार्थायां

(१) अनित्यत्वेन–इति खपुस्तके नास्ति।
(२) संसारमलोन्मूलनाय यतते–इति खपु०।
(४) प्रवक्ष्यते–इति खपु०।

श्रुतावपि ब्रह्मविद्याप्रवृत्तिः । 'मुख्यैव शब्दस्य वृत्तिर्न लक्षणे'-ति नच वाच्यम्, वृद्धैरुभयोरपि शब्दवृत्तित्वेन स्वीकारात् । ननु भवतु श्रुतिरूपग्रन्थोऽप्युपनिषत्, तथापि न व्याख्यानार्हतामासादयेत् । देहेन्द्रियान्तःकरणाविलक्षणात्मनः कर्मविशेषणत्वेन(१)स्तुतिपरत्वात् । न, तत्र (२)विलक्षणत्वस्यैवोपपादितत्वात् । नहि विलक्षणत्वमात्रेणाऽऽत्मस्वरूपं शक्यमाकलयितुम् । अत्र तु 'अयमात्मा ब्रह्म, 'तत्त्वमसी'त्यादिमहावाक्यैर्ब्रह्मात्मैकत्वलक्षणमात्मतत्त्वं निरूप्यत इत्यगतार्थत्वेन व्याख्यानार्हत्वमासादयेदेव ।

ननु कर्मकाण्डदेवताकाण्डयोः फलपरत्वादेकस्यैव वेदस्य वाक्यभेदप्रसङ्गेन न व्याख्यानार्हत्वमिति–चेन्न, काण्डत्रयस्यैकवाक्यताप्रसिद्धेः । कर्मकाण्डे 'तमेत'मित्यनया विविदिषाश्रुत्या यज्ञदानादिनाऽन्तःकरणशुद्धिमुत्पाद्य, देवताकाण्डे चोपासनया शुद्धान्तःकरणैश्चित्तस्थैर्यं शिक्षित्वा, ज्ञानकाण्डे त्वंपदार्थतत्पदार्थद्वयपरिशोधनेन जहदजहल्लक्षणया ब्रह्मात्मैकत्वं प्रतिश्रवणादिना प्रतिपत्तव्य(३)मिति काण्डत्रयसङ्गतिर्भगवद्भिः श्रीमच्छङ्कराचार्यैरेव दर्शिता । नाऽतः पृथक्प्रयत्न आश्रीयते ।

ननु भवतु काण्डत्रयसङ्गतिस्तथापि वेदानां शब्दत्वाच्छ-

---

(१) कर्मविधिशेषत्वेन–इति खपु० ।

(२) तद्विलक्षणत्व०–इति कपु० ।

(३) प्रयतितव्य०–इति खपु० ।

ब्दस्य च श्रीरामब्रह्मपरत्वाऽसम्भवान्न व्याख्या युक्तिमती। यतः—शब्दप्रवृत्तिस्तु त्रिधा, मुख्या लक्षणा गौणी चेति। मुख्यापि द्विविधा रूढियोगभेदेन। तत्र रूढिस्तावद्ब्रह्मणि न प्रवर्तते, तस्य(१) शब्दाऽगोचरत्वात्, तस्याश्च स्वरूपजातिगुणनिर्देशार्हे वस्तुन्येव 'डित्थः गौः शुक्ल' इति संज्ञासंज्ञिसङ्केतेन प्रवृत्तेः। नापि यौगी, नापि लक्षणा। ब्रह्मणोऽसङ्गत्वेन सम्बन्धाभावात्। योगवृत्तेर्निराकरिष्यमाणत्वाल्लक्षणायाश्च संज्ञासंज्ञिसङ्केतेनाऽभिहितार्थसम्बन्धिनि वस्तुनि 'गङ्गायां घोष' इतिवत् प्रवृत्तेः। *यथाहुः—

'अभिधयाऽविनाभूतप्रवृत्तिर्लक्षणेष्यते'

इति। न गौणी, ब्रह्मणो निर्गुणत्वात्। गौण्यास्तु अभिहितार्थलक्षितगुणयुक्ते तत्सदृशे 'सिंहो माणवक' इतिवत् प्रवृत्तिः *। यथाहुः—

'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता'

इति। योगवृत्तेरसङ्गत्वाद्धेतोर्न ब्रह्मपरत्वम्। तस्याश्च रूढिलक्षणागुणत्रिविधवृत्तिप्रतिपादितपदार्थयोर्वा प्रकृतिप्रत्ययार्थयोर्वा योगे वा 'पङ्कजमौपगवः पाचक' इत्यादिवत् प्रवृत्तिः। अतो ब्रह्मणः पदार्थत्वायोगा(२)दपदार्थस्य च वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वम्।

---

(१) तस्य—इति कपुस्तके नास्ति।

*एतच्चिन्हाङ्कितः पाठः खपुस्तके नोपलभ्यते।

(२) योगात्पदार्थस्य इति खपु०।

अत्रोच्यते- ब्रह्मणः शब्दागोचरत्वेनाऽसङ्गत्वेन निर्गुणत्वेन च श्रुतिगोचरत्वं साक्षान्माभूत्, तथापि सगुणद्वारा निर्गुणे समन्वयाद्युक्तमेव ब्रह्मपरत्वं वेदानाम् । तथाहि-'यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तपः सर्वस्य वशी सर्वस्येशानः यः पृथिव्यां तिष्ठन् पृथिव्या आन्तरः सोऽकामयत बहु स्यां स ऐक्षत तत्तेजोऽसृजत् सत्यं ज्ञानमनन्तं ब्रह्मे'त्याद्याः श्रुतयो भगवन्तं षड्गुणैश्वर्यनिलयं सकलकल्याणगुणनिलयं सर्वज्ञं सर्वशक्ति(१)सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं सर्वकर्मफलदातारं सच्चिदानन्दं सगुणं गुणानभिभूतं श्रीरामचन्द्रं प्रतिपादयन्ति । तत्त्वमस्यादिवाक्यानि तु तादृगीश्वरत्वाभावाज्जीवस्य संसारनिवृत्तिद्वारा 'तत्त्वं'पदयोः सामानाधिकरण्यप्रतीत्यन्यथाऽनुपपत्त्या निर्गुणे पर्यवस्यन्ति । न तावत्सामानाधिकरण्यं 'वैश्वदेव्यामिक्षे'तिवदुभयोरेकार्थाभिधानेन । कुतः-भिन्नार्थत्वात् । यथोक्तम्—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम् ॥

इति । नच अजहत्स्वार्थयोः सामानाधिकरण्यं निरूढलक्षणया विशेषणविशेष्यभावेन 'नीलमुत्पल'मितिवत् । कुतः-विरुद्धार्थत्वेन तदयोगात् । तदुक्तम्—

'स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम्'

इति । नच जहत्स्वार्थत्वेन सम्बन्धिलक्षणया 'कुसुमितद्रुमा

(१) सर्वशक्ति-इति कपुस्तके नास्ति ।

गङ्गे'तिवत् । कुतः-एकार्थत्वस्य विवक्षितत्वात्(१) । अतो जहदजहत्स्वार्थलक्षणया 'सोऽयं देवदत्त' इतिवत् विरुद्धांशत्यागेनाऽनुगतचिदंशेनैकार्थ्येन निर्गुणे पर्यवसानम् । अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधेन, उपासनावाक्यानां त्वन्यार्थप्रवृत्तसृष्ट्याद्यवलम्बनेन ज्ञानसाधनविधानेन निर्गुणब्रह्मपरत्वं प्रसिद्धम् । अतो ब्रह्मणि समन्वयादुपनिषदो व्याख्यानमुचितमित्यलमतिप्रसङ्गेन ।

तत्र श्रीरामपूर्वतापिनीये मन्दाधिकारिणां सगुणोपासनं निर्गुणोपाधिकं 'चिन्मय' इत्यादिपञ्चोपनिषदा निरूपितम् । इदानीमुत्तमाधिकारिणां कर्मसु तत्फले विरक्तानां संन्यासिनां परमहंसानां श्रीरामोत्तरतापिनीयोपनिषदा तदेव निर्गुणोपासनं सगुणफलभूतं निरूप्यते । एतामेव श्रीरामचन्द्रब्रह्मविद्यामविद्यापनोदिनीं प्रकटयितुं कदाचिन्मिथिलोपवने जनको वैदेह आसाञ्चक्रे। तत्र च योगीश्वरः शिष्यसङ्घैर्मुनिगणैश्च परिवारित आसीत् । तत्रानेकैर्मुनिवरैस्तद्ब्रह्मवेत्तृत्वमसमानैः(?) पृच्छ्यते ।

बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्। अविमुक्तं वै

(१) नचाजहत्स्वार्थयोर्लक्षणया 'कुसुमितद्रुमा गङ्गा' इतिवत् । कुतः-एकार्थत्वस्य विवक्षिः सामानाधिकरण्यं निरूढलक्षणया विशेषणविशेष्यभावेन 'नीलमुत्पल'मितिवत् । कुतः-विरुद्धार्थत्वेन तदयोगात् । तदुक्तम्-'स्वबुद्ध्या रज्यते-' इति पाठः खपुस्तके ।

कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्।
तस्माद्यत्र क्वचन गच्छति तदेव मन्येत ।

एवं सति तं बृहस्पतिः—गुरुरुवाच याज्ञवल्क्यं—यज्ञवल्क्यस्यापत्यं यत्—प्रसिद्धं अनु—यत्सर्वस्मादप्यूर्ध्वं पुण्यातिशयचरमकोटिनिविष्टं, सर्वोत्कृष्टं पुण्यफलमिति गावत् । कुरुक्षेत्रं, 'कुत्सितं रौती'ति कुरु—पापकर्म संसारहेतुभूतम्, तस्य क्षेपणान्निरसनात् त्रातीति क्षेत्रम् । क्षेत्रे हि रूढं मूलतृणादि निरस्यते । यद्वा कुः—पृथिवी देहाद्याकारपरिणता, तस्यां रौति—रावं करोतीति कुरुः—प्राणः तस्य क्षेत्रं—रावकर्तुः प्राणस्य निवासस्थानं तत्कुरुक्षेत्रम् । प्राणस्याऽधिष्ठानमित्यर्थः । देवानां—इन्द्रियाणां तदधिष्ठातॄणां वा देवयजनम्, देवस्य—स्वयंप्रकाशस्यात्मनो द्योतनात्मकान्तर्यामिणः, श्रीरामचन्द्रस्येत्यर्थः । यजनं—पूजाकारणम् । यत्र हि इन्द्रियाणि विविधविषयोपहारैः 'स्वं'पदाभिधमात्मानं श्रीरामचन्द्रं पूजयन्ति । तथाच वार्तिककारः—'भोगाश्चिदवसानते'ति । सर्वेषां भूतानां—समष्टिव्यष्ट्यात्मकानां ब्रह्मसदनम्, ब्रह्म—श्रीरामाख्यं देशकालवस्तुपरिच्छेदशून्यम् तदेव सदनं—निवासस्थानम् । यत् विशेषणद्वयविशिष्टं कुरुक्षेत्रम् , तत्किमिति शेषः । उत्तरमाह, अविमुक्तं—अविद्याकामकर्मादिभिर्मुक्तमप्यविद्यादशायां अविमुक्तम् । वै—प्रसिद्धं ब्रह्म पुरुषशब्दवाच्यम् । तच्च द्विविधम्, पूर्णं तत्पदं उपाध्युपलक्षितं रामं पुरि

शयानम्, त्वं पदं उपाधिधर्मानात्मनि मन्यमानं आत्मानम्(?)। तदुक्तम्—

उपाधिरज्ञानमनादिसिद्धमस्मिंश्चिदाभासनपीश्वरत्वम्।
उपाधिरन्तःकरणं त्वमर्थे जीवत्वमाभासनमस्य तद्वत्॥

इति। तत् शोधितपदार्थद्वयभूतं ब्रह्मैव 'कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदन'मित्यनुवादः। पदार्थद्वयपरिशोधनेनैकरसं ब्रह्मैव स्थानं भवति यस्मात्, तस्माद्यत्र क्वचन-यत्र क्वापि गङ्गाप्रयागादौ तद्विपरीते वा गच्छति तदेव-तत्स्थमेव मन्येत-जानीयात्। कथम्, इति-अनेन प्रकारेण।

प्रकार माह—

इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्। अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे। येनासौ अमृती भूत्वा मोक्षी भवति। तस्मादविमुक्तमेव निषेवेत। अविमुक्तं न विमुञ्चेदिति एवमेवैतद्याज्ञवल्क्यः॥

इति प्रथमकण्डिका।

इदं वै—मया प्राप्तं स्थलमेव तदविमुक्तमेवेत्यन्वयः। उक्तविशेषणमेव नान्यादिति पुनः पुनराह—कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमिति। स्थलमेवाऽविमुक्तमित्युपचारेणाऽव्यग्रत्वसम्पादनार्थं स्तूयते। अत्र—अविमुक्ते कुरुक्षेत्रादिरूपे पदार्थद्वयपरिशोधने हि—यस्मात् जन्तोः—पदार्थद्वय-

सामस्त्यमजानतः मुमुक्षोः प्राणेषु—पञ्चप्राणज्ञानकर्मेन्द्रियमनांसि षोडश तेषु उत्क्रममाणेषु—अभिमानाभावेन विलीनतां प्राप्तेषु सत्सु लीनप्रायेषु सत्सु। तथाच स्मर्यते—

प्राणे गते यथा देहः सुखं दुःखं न विन्दति।
तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत्॥

इति। रुद्रः, रुत्—दुःखं अविद्यातत्कार्यभूतं द्रावयति—नाशयतीति तथा ईश्वरस्तत्पदार्थो राम एवाऽऽचार्यो भूत्वा, 'आचार्यवान् पुरुषो वेदे'ति श्रुतेः। तारकं—तारात्मकत्वात् तथा, सर्वस्मात्संसारभयात् सन्तारयतीति वा तथा, ब्रह्म—तारकविशेषणविशिष्टं ब्रह्मविद्याब्रह्मात्मैक्यबोधकं महावाक्यं, श्रीराममन्त्रमिति यावत्। व्याचष्टे—कथयति। येन—तारकब्रह्मजनितज्ञानेन असौ—रुद्रानुगृहीतो जीवः अमृती—अमृतो भूत्वा 'ब्रह्माऽस्मी'त्यभिमानवान् सन् मोक्षी भवति—स्वेन स्वयंज्योतिःस्वरूपरामात्मनाऽवतिष्ठते। राममन्त्ररामयोर्वाच्यवाचकत्वेन भेदात् पूर्वस्य हेतोर्यस्मादर्थस्य नान्वयः, तस्मात्—अविमुक्तस्य शुद्धत्वंपदार्थस्य निरुपाधिब्रह्मरामतापत्तेः अविमुक्तमेव निषेवेत—नितरां सेवेत। विजातीयप्रयत्नाऽनन्तरितसजातीयप्रयत्नप्रवाहेण साक्षात्कुर्यादित्यर्थः। अविमुक्तं न विमुञ्चेत्—यस्मिन् कस्मिन्देशे आत्मानुसन्धानं न परित्यजेत्। तदुक्तं पूज्यपादैराचार्यैः—

त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम्।
श्रुत्या विधीयते यस्मात्, तत्त्यागी पतितो भवेत्॥

इति । एवंगुणयाज्ञवल्क्यस्य बुद्धिपरीक्षार्थं स्वस्य बुद्धिशुद्ध्यर्थं वा पृष्टेन याज्ञवल्क्येनोक्तमङ्गीचकार बृहस्पतिः, एवमेवैतत्–पदार्थद्वयैक्यमेवाविमुक्तं कुरुक्षेत्रं देवयजनं ब्रह्मसदनमिति। पदार्थद्वयशुद्धिं ज्ञातवतः प्राणाद्युपाधिविलये ईश्वरानुग्रहेणोक्तं ब्रह्मविद्यया ब्रह्मात्मैक्यं भवतीति भावः । 'ब्रह्मैव सन् ब्रह्माऽप्येती'ति श्रुतेः ।

यद्वा प्राग्जन्मनि संन्यासाद्यधिकारसम्पादनेऽपि केनचिद् बलीयसा कर्मणा कस्यांचिद्योनौ जडभरतवदुत्पन्नानामधिकारिणामनधिकारिणां वा सर्वेषामनुग्रहार्थं पृच्छति, यत्–प्रसिद्धं अनु–पश्चात् सर्वत्र विहरतामविहारार्थं पदं सर्वतीर्थेभ्य उत्कृष्टतमं भूमेरुत्तमाङ्गमिति यावत् । कुरुक्षेत्रं–कुरुणा राज्ञा पालितमनादिसिद्धं क्षेत्रं देवानां देवयजनं ब्रह्मावाप्तिहेतुभूतं, तत्किमिति शेषः। विशेषणद्वयविशिष्टं प्रसिद्धं कुरुक्षेत्रमेव कुरुक्षेत्रमन्यद्वेति सन्देहे उत्तरमाह, अविमुक्तं–कदाचिदपि विश्वेश्वरेणाऽविमुक्तं काश्यभिधेयं वै–निश्चयेन कुरुक्षेत्रम् । देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमविमुक्तादुत्कृष्टतमं नास्ति यस्मात् , तस्माद्यत्र क्वचन गच्छति–पञ्चक्रोशेषु यत्र कुत्रचिद्विचरति तदेव–एवम्भूतं प्रदेशमेव मन्येत–जानीयात्। कथमिति–अमुना प्रकारेण। प्रकारमाह,इदं वै—इदमेव कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमिति । अत्र–अविमुक्ते हि–यस्मात् जन्तोः—प्राणिमात्रस्य प्राणेषूत्क्रममाणेषु–लोकान्तरं गच्छत्सु, रुद्रः दुःखहारित्वाद्रोदनाद्वा तारकं ब्रह्म–

श्रीराममन्त्रात्मकं व्याचष्टे–दक्षिणे कर्णे कथयति । तदाह विश्वेश्वरः श्रीरामं प्रति—

मुमूर्षोर्मणिकर्णिक्यामर्धोदकनिवासिनः ।
अहं दिशामि ते मन्त्रं तारकं ब्रह्मसंज्ञितम् ।
अतस्त्वं जानकीनाथ ! परं ब्रह्माऽसि(१) निश्चितम् ॥

इति । येन–तारकब्रह्मविद्योपदेशेन असौ–जीवः अमृती भूत्वा–ब्रह्मास्मीत्यभिमानवान् सन् मोक्षी भवति—विदेहकैवल्यमापद्यते, शुद्धान्तःकरणस्य आचार्यरूपेणोपदेशाद्विदेहतां जीवन्मुक्ततां वाऽऽपादयति । पूर्णानन्दरूपेण(२) स्वसन्निधिलेशवशाच्छुद्धतामुत्पाद्य विदेहतां भक्तवात्सल्येन गलगरलादिदेहदानेन जीवन्मुक्ततां चाऽऽपादयतीति । नचात्र तारतम्यव्यवस्थाकरणमुचितम्, उपदेष्टुरुपदेष्टृवाक्यस्य च जलधिजलवदनसम्पादतदुत्कृष्टत्वात्(?)(३) । ज्ञानादेव तु कैवल्यम् । तज्ज्ञानसौलभ्यमत्रैव यस्मात्, तस्मादविमुक्तमेव निषेवेत–अत्यादरेण सेवेत । अविमुक्तं न विमुञ्चेत्–क्षेत्रसंन्यासं कुर्यात् । अङ्गीकारादाह गुरुः–'एवमेवैतद्याज्ञवल्क्य' इति ।

नन्वेवमपि 'प्राणेषूत्क्रममाणेषु' इत्यनया श्रुत्या प्राणवतां जङ्गमानामेव(४) तारकब्रह्मोपदेश इति चेन्न, स्थावराणामपि

(१) परं ब्रह्म सुनिश्चितम्–इति कपु० ।

(२) किं पुनर्निजरूपेण न–इति खपु० ।

(३) नात्र तारकस्य व्यवस्थाकरणमुचितम । उपदेष्टुर्वाक्यस्य च जलधिजलवनसंयाववदुत्कृष्टत्वात्–इति खपु० ।

(४) चरतां–इति कपु० ।

प्राणधारणाऽविशेषात् । नहि प्राणव्यतिरेकेण यस्य कस्यापि जन्म सम्भवति । 'यच्च किंच प्राणभृ'दिति श्रुतेः ।

यत्किचेदं प्राणिजातं जङ्गमं च पतत्त्रि च ।
यच्चात्र स्थावरं सर्वं तत्प्रज्ञाने प्रतिष्ठितम् ॥

इति स्मृतेश्च । जङ्गमेषु प्राणोत्क्रान्त्यभि(१)व्यक्तिर्यथा, न तथा (२)स्थावरेष्विति विशेषः । 'भूतानां प्राणिनः श्रेष्ठा' इति मनुवाक्यमपि अभिव्यक्त्याभिप्रायमेव, नत्वन्यत्राऽप्राणित्वप्रतिपादनपरम् । तर्हि शास्त्राधिकारित्वान्मनुष्याणामेवाऽस्त्विति चेन्न, पूर्वजन्मनि सुसंस्कृतस्यापि (३)केनाचित्प्रतिबन्धकेन कर्मणा यत्किंश्चिद्देहावगतौ शास्त्रसाफल्यात् । नह्येकेन जन्मना विमुक्तिसौलभ्यम् ।

'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते'

इति भगवद्वचनात् । तथापि जडभरतवत् पूर्वसंस्कारस्मरण(४)सन्निधिविरहान्नेति चेन्न, परबुद्धेरप्रत्यक्षत्वात् । अविमुक्तप्राप्त्यन्यथाऽनुपपत्तिप्रमाणबलादप्यवगम्यते । पूर्वकृतसंन्यासाद्यधिकारकर्मपरिसमाप्त्यभावादिति चेन्न, प्रारब्धकर्मण एवोर्वरितत्वात् । अविमुक्तप्रान्ते(५) पूर्वजन्मेहजन्मकृतानां

---

(१) प्राणोत्क्रममाणेन अभि०–इति खपु० ।

(२) सर्वं तथा–इति कपु० ।

(३) सूत्रसंस्कृतस्यापि–इति खपु० ।

(४) संस्कारस्मरण–इति खपुस्तके नास्ति ।

(५) प्राप्तौ–इति कपु० ।

कर्मणामप्रवेशेन प्रारब्धस्य तस्य कुलालचक्रभ्रमणवदाशरीरान्तमवस्थानम् । ननु प्रारब्धशेषवतामप्यविमुक्तनिष्क्रमणं कथमिति चेत्, ईश्वरानुग्रहाभावादिति ब्रूमः । 'जडानां कर्मणां चेतनेश्वरसहायापेक्षे'ति न्यायात् । तथाच स्कन्दः—

ईश्वरानुग्रहादेव काशीवासः सुदुर्लभः ।
सुलभः स्यान्मुने ! नूनं नरैः सुकृतकोटिभिः ॥

इति । (१) काशीवासिकृतकर्मणामसंक्षयान्नोपदेश इति चेन्न, अविमुक्तस्योषरत्वात् ।

'ऊषरः पुण्यपापानां धन्या वाराणसी पुरी'
'इदं प्रिये ! क्षेत्रमतिप्रियं मे संसारबीजोषरमूषराणाम्'

इत्यादिवचननिचयैरूषरत्वं सङ्गृह्यते ।

'वाराणस्यां कृतं पापं वज्रलेपो भविष्यति'
'यथात्र पुण्यं कृतमक्षयं स्तात्तथाऽत्र पाप'मित्यादिवाक्यविरोधादिति चेन्न, तेषामन्यविषय(२)त्वात् । अत्र कृतदुष्कृतानामन्यत्र प्राप्तमरणपरत्वात्(३) ।

'अश्मना चरणौ हत्वा तत्रैव निधनं व्रजेत्'

इत्यादिवाक्यान्येतदर्थान्येव । तर्हि यथेष्टाऽऽचरणप्रसङ्ग इति चेन्न, अविधानात् । नह्यग्निहोत्रादिवद्ब्राह्मणहननादिविधिः श्रूयते, प्रत्युत निषेधश्च श्रूयते ।

---

(१) अत्र 'ईश्वरानुग्रहात्' इत्यधिकं क,खपुस्तकयोः ।
(२) परत्वात्-इति खपु० ।
(३) अविमुक्तकृतसुकृतदुःकृतानामन्यत्र प्राप्तमरणत्वात्-इति कपु० ।

अशनं वसनं वित्तं येषां काश्याममार्गतः ।
कीकटेन समा काशी सत्यं सत्यं खगाधिप ! ॥

इत्यादिवाक्यैर्यथेष्टाऽऽचरणप्रतिषेध एव क्रियते, नत्वनुज्ञाप्यते । अविधेयत्वेऽपि केषांचिद्विरुद्धाचरणाऽऽदृतिर्दृश्यत एवेति चेत्सत्यम्, तस्याश्चात्रैव निरसनात् । काशीकृतपापिनो दण्डधरेण श्रीकालभैरवेण त्रिंशत्सहस्रसंख्याकं कालं नानायोन्यग्नौ पच्यन्ते । तर्हि 'शरीरिणां नास्ति पुनः शरीर'मित्यादिसायुज्यवचननिचय(१)व्याकोप इति चेन्न, प्राणोत्क्रमणक्षणक्षणेन भोग्यत्वात् । तथाहि—सकलसंसारस्य मायामयत्वात् यथा स्वप्ने मनोरथे वा देशान्तररूपान्तरसंवत्सरशतानुभवः, यथा मार्कण्डेयस्य सप्तकल्पानुभवः, यथा नारदस्य स्त्रीत्वाद्यवाप्तिः, लवणस्य वा मातङ्गस्त्रीपुत्राग्निपतनम् । स्वप्नादिसंसारस्यासत्यत्वं मार्कण्डेयादिसंसारस्य सत्यत्वं कथमिति चेत, वासनादार्ढ्यादिति ब्रूमः । स्वप्ने हि वासनाशैथिल्यम्, अन्यदा दार्ढ्यमनुभूयत एव । तस्मादस्मिन्नेव शरीरे प्राणोत्क्रमणकाले यथेष्टाऽऽचरणफलानुभवान्ते तारकब्रह्मोपदेशाद्विदेहतैव । 'मुक्तिरेकेन जन्मने'त्युक्तत्वात् । तर्हि 'यदस्ति(२) कण्ठे गरल'मित्यादिवाक्यैर्देहावाप्तौ न सायुज्यमिति चेन्न, तस्याः क्रमपरत्वात् । तारकब्रह्मोपदेशसमानत्वेऽपीश्वरानुग्रहशैथिल्यान्मुमूर्षोरन्तःकरणवै-

(१) निचय-इति कपुस्तके नास्ति ।
(२) यद्यास्ति-इति खपु० ।

कल्याद्वा परोक्षज्ञानोत्पत्तावयोनि(गळ)जगरळा(२)दिसारूप्य-सामीप्यसालोक्यमनुभूयाऽन्ते सम्यगीश्वरानुग्रहादपरोक्षज्ञानेन सायुज्यमाप्नोतीति तारकब्रह्मोपदेशान्निर्विक्षेपो मोक्ष इति सिद्धम् ॥ १ ॥

इति आनन्दनिधिटीकायां प्रथमकण्डिका समाप्ता ।

---

(२) ०क्षज्ञानोत्पत्तावयोनिजगरळा०—इति कपुस्तके न दृश्यते ।

# अथ द्वितीयकण्डिका ।

प्रथमकण्डिकानिर्दिष्टस्य तारकब्रह्मणः स्वरूपकथनार्थेयं द्वितीया कण्डिकाऽऽरभ्यते अथेति ।

अथ हैनं भरद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकं किं तरतीति । सहोवाच याज्ञवल्क्यस्तारकं दीर्घानलं बिन्दुपूर्वकं दीर्घानलं पुनर्माय नमश्चद्राय नमो भद्राय नमः इत्यों तद्ब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासितव्यम् ।

अथ—गुरुप्रश्नसमनन्तरमेवाऽऽह, गौरवार्थम् । एनं—याज्ञवल्क्यं भरद्वाजः—ऋषिः पप्रच्छ—किं तारकम् । पूर्वं 'तारकं(१) ब्रह्म व्याचष्टे' इत्येवोक्तम्, नतु तत्स्वरूपमिति तत्पृच्छति—किं तरतीति । तरणविषयः प्रश्नः । इतिशब्दः प्रश्नद्वयसमाप्तौ । नहि साधनफलपरिज्ञानेन अन्यज्ज्ञेयमवशिष्यत इति भावः । 'ज्ञाने परिसमाप्यत' इति स्मृतेः । सः—याज्ञवल्क्यः ह उवाच । तारकमिति पूर्वोक्तमनूद्य कथयति । तारमिति पाठे ॐकारपूर्वकत्वमुक्तं भवति, ॐकारस्य तारनामत्वात् । तदुक्तं प्रपञ्चसारे(२)

---

(१) पूर्वं तारकं—इति कपुस्तके नास्ति ।

(२) प्रपञ्चसारे—इति कपुस्तके न विद्यते ।

श्रीमदाचार्यैः—

ॐकारो गुणबीजं प्रणवस्तारो ध्रुवश्च वेदादिः।

आदिरुमध्यो मपरो नामान्यस्य त्रिमात्रिकश्च तथा॥

अस्य तु वेदादित्वात् सर्वमनूनां प्रयुज्यते चादौ।

इति। दीर्घानलं–दीर्घाकारयुक्तमनलमग्निबीजम्। ऋलृदीर्घ(१)द्वयरहितानां षण्णामप्याकारादीनां दीर्घशब्दवाच्यत्वेऽपि प्रथमाऽतिक्रमे कारणाभावादाकारस्यैव आनन्दपदनिर्वर्त्यत्वाच्च प्रकाशभूतेनाऽनलेन आकारयोजनमेवाऽनवद्यम्। बिन्दुपूर्वकं–बिन्दुः पूर्वो जन्मभूः, बिन्दोः सकाशात्पूर्वं जन्म यस्ये'ति वा। बिन्दुपूर्वमेव बिन्दुपूर्वकम्, स्वार्थे कः। शब्दसृष्ट्यादौ 'तम एवाग्र आसी'दित्यनया श्रुत्या सच्छब्दवाच्यमविद्याशबलं ब्रह्मैवोक्तम्। तदीक्षणेन क्षुभितगुणा वंशशकलकरणवत् कृत(२)तराऽविद्या कला व्यक्तं चेत्युच्यते। ततः शब्दार्थगर्भत्वयाविद्या बिन्दुर्महत्तत्त्वं चेत्यभिधीयते। 'महतोऽहङ्कारः, ततः पञ्चतन्मात्राणि, तेभ्यो भूतानि, तेभ्योऽखिलं जगत्' इत्यर्थसृष्टिक्रमः(३)। बिन्दोर्नादः, स च परापश्यन्तीमध्यमावैखर्याख्यामवस्थामनुभूय स्वरवर्णपदवाक्यात्मको भवतीति शब्दसृष्टिक्रमः। परस्य शब्दात्मनो ब्रह्मणश्चतस्रोऽवस्थाः समामनन्ति तत्त्वविदः।

---

(१) अत्र 'षट्' इति पदमधिकमिव भाति।

(२) करणकृततरा—इति खपु०

(३) इति सृष्टिक्रमः—इति खपु०

आद्या तावत् परेति गीयते। या खलु आद्या–शक्तिरिति शाक्तैः, चितिरिति शैवैः, कुण्डलिनीति योगिभिः, प्रकृतिरिति साङ्ख्यैः, ब्रह्मेति पाराशर्यैः(१), बुद्धिरिति बौद्धैः, स्वशक्त्युन्मिषितगोत्वाद्युपाधिरहिता महासत्तेति जातिवादिभिः, तथाविधो(२)पाधिरहितं केवलं द्रव्यमिति द्रव्यवादिभिरेकाऽप्यनेकैर्नामभिर्व्यवह्रियते। यां चोत्तरायामवस्थायां निजैकाश्रयमायाख्यशक्तिकल्पितानेकोपाधिभेदाभिन्नस्वरूपामाचक्षते विचक्षणाः। यया च प्रकाशमय्या स्वाभिन्नतया विश्वं प्रकाश्यते। यस्यै वाऽविद्या शाश्वतिकविरोधाऽपि नित्यसन्निहिताऽपि द्रोग्धुं(३) न शक्नोति। यस्याश्च महोदन्वदम्भस्ततोरिवोदबिन्दुसञ्चय इवोदञ्चति प्रपञ्चः। यस्याः किलार्चिःकणाः(४) तारातारापतितरणितनूनपात्प्रभृतयः। यस्यां च बुद्धायां मायाशक्तिनिशायामिवाऽपगततमसि प्रभातायां संसारः स्वप्न इव संलीयते। सैव पराख्या शक्तिरनादिवासनापर्यायाऽविद्याख्यस्वशक्तिक्षोभ्यमाणा(५) सुप्तोत्थितेव यदा विमर्शोन्मुखी भवति, तदा पश्यन्तीत्युच्यते। सा द्वितीयावस्था भण्यते। यदा पुनः सा प्राप्तविमर्शदशा स्वाश्रयाऽविद्याशक्तिपरिकल्पितं स्वस्यैव विवर्तभूतं स्वत्वा(६)नुस्यूतमनादि-

---

(१) पाराशरिभिः–इति कपु०

(२) तथाविद्यो०–इति कपु०

(३) बोधुं–इति कपु०, द्राधु–इति खपु०।

(४) किरण—इति कपु०

(५) क्षोभ्यमाण०–इति खपु०

(६) मत्वा—इति खपु०

वासनानुकूलसमयानुरूपं स्वस्मादभिन्नमपि भिन्नमिव विमृशन्ती पदार्थजातमाभ्यन्तरं बाह्यं च बुद्धिप्रतिभासलक्षणं रागादिदुष्टतयाऽन्तःकरणस्य संमुखं गृह्णाति, तदा मध्यमेत्याम्नायते। तां तृतीयामवस्थामाहुः। अस्यामेवाऽवस्थायां परायाः शक्तेर्यो विमर्शोऽशः स वाचकः शब्दोऽभिधीयते। यस्तु विमृश्योऽशः स वाच्योऽर्थ इति व्यपदिश्यते। यः पुनरैकात्म्यावभासः, स शब्दार्थयोर्वाच्यवाचकभावाख्यः सम्बन्धो निगद्यते। ततश्च शब्दार्थसम्बन्धानामनादिसिद्धत्वम्। तथा चोक्तम्—'सिद्धे शब्दार्थसम्बन्धे चे'ति। सिद्धे शब्देऽर्थे सम्बन्धे चेति। एवं कृत्वा विमर्शाख्यशब्दानुविद्धत्वाद्विमृश्याख्यप्रपञ्चप्रज्ञानतायाः(१), प्रपञ्चस्य शब्दविवर्तत्वं सिद्धं भवति। सैव यदा विमर्शविमृश्योभयभावस्पर्शिनी ताल्वोष्ठादिस्थानविवृतत्वादि(२)-करणजनितैर्नादविशेषैः कृतसंस्काराऽन्तःकरणवृत्त्या क्रमवशान्नादमयी च परिगृह्यते, तदा वैखरीत्याम्नायविद्भिराम्नायते चतुर्थी (३)अवस्था बिन्दोः। तदुक्तम्—

वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा।
उद्यतार्था च पश्यन्ती सूक्ष्मा वागनपायिनी॥

इति।अतः शब्दसृष्टे(४)र्बिन्दुपूर्वकत्वात् वटकणिकानिदर्शनेन

---

(१) प्रज्ञातप्रपञ्चस्य-इति खपु०।

(२) विवर्तत्वादि-इति खपु०।

(३) चतुर्थीमवस्थां विदुः-इति खपु०।

(४) शब्दसृष्टौ-इति खपु०।

त्रिन्दुशिरस्कं तारकाद्यं(१) बीजमुद्धरेत् । मकारश्चैतन्याऽवद्योतकोऽमृतरूपश्चन्द्रस्तदाकारवान् बिन्दुः, तद्योजनया प्रकाशानन्दचिदात्मकं बीजमुद्धृतं भवतीत्यभिप्रायः । 'मः शिवश्चन्द्रमा वेधे'ति कोशकाराः । बिन्दुपूर्वकमिति बिन्दुग्रहणं कलानादयोरुपलक्षणम् । ततश्च मन्त्रबीजमस्तके नादबिन्दुकलाः प्रदर्शयेत् । अतोऽर्थसृष्टिर्वाच्या, शब्दसृष्टिस्तु वाचिका । तदुक्तम्—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते(२) ॥

इति । दीर्घानलं पुनः—अनुक्तत्वाद्बिन्दुरहितं तदेव पुनरुद्धरेत् । 'माय नम' इति योजनायां षडक्षरं तारकस्वरूपमुक्तं भवति । सबीजेन रामपदेन 'चन्द्राय नम' इति योजनीयम्, तथा 'भद्राय नम' इति । एवं मन्त्रत्रयं भवति । ननु सबीजेन रामपदेन चन्द्रभद्रपदयोजनयाऽष्टाक्षरमन्त्रद्वयसामानाधिकरण्यान्मन्त्रत्रयमपि तारकब्रह्मविद्या स्यात् । न स्यात्, षडक्षरमन्त्रराजस्यैव सर्वात्मकत्वप्रदर्शनात् ।

ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादि(३)संज्ञितः ।
सर्ववाच्यस्य वाचकः ॥

इति श्रीरामपूर्वतापिनीयश्रुतिव्याख्यानावासरे सर्वात्मकत्वं व्याख्यातम् ।

---

(१) ताराद्यं-इति कपु० ।
(२) भासते-इति कपु० ।
(३) द्व्यर्थादि-इति कपु० ।

'सर्वेषां राममन्त्राणां मन्त्रराजः षडक्षरः'

इत्यगस्त्यसंहितायां च । अतः सर्वेषामेकाक्षरादीनां रामानुष्टुप्(१)मध्यानां रामसहस्राक्षरान्तानां(२) श्रीराममन्त्राणां सर्वेषां गणेशादिचतुर्णां ( मन्त्राणां ) सकलवेदानां कल्पानां (३) लोकानां चार्थवाचकत्वेन सर्वात्मकत्वात् षडक्षररामन्त्र एवाऽनेकप्रकाशकांऽशुमालीव तारकस्वरूपं नान्यादिति । ननु 'उक्तमन्त्रद्वयात्मकमेवाऽस्तु, सहपठितत्वात् । न, सर्वमन्त्राणामुपलक्षणार्थत्वेनोक्तेः । न केवलं सर्वप्रपञ्चकार्यभूतमेव तारकम्, किन्तु सकलकारणॐकारात्मकमपीत्याह—इत्योमिति । इति—उक्तप्रकारं षडक्षरं तारकं ॐ—ॐकारात्मकं भवति। नह्येतस्मादन्य ॐकारः,ॐकारादेतदन्यदपि(४) नेत्यर्थः । एवं यस्मात्, तत्—तस्मात् ब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासितव्यम्। षडपि मन्त्रवर्णा ब्रह्मात्मकाः—ब्रह्मवाचकत्वाद्ब्रह्मस्वरूपाः । सच्चिदानन्दाख्याः(५)— सच्चिदानन्दरामावबोधकत्वाद्गौण्या वृत्त्या तदाख्याः, पञ्चवर्णानां सच्चिदानन्दबीजाद्यत्वाद्वा । इति ताराद्ययवतारकब्रह्माक्षराणामैक्यसम्पादनेन षडक्षरं तारकमेवोपासितव्यम् । कृताधिकारिभिः साधनचतुष्टयसम्पन्नैर्मुमुक्षुभिः परमहंसपरिव्राजकैरेतदेवा-

( १ ) दीनामनुष्टुप्—इति कपु० ।

( २ ) रामसहस्राक्षरान्तानां—इति कपुस्तके नास्ति ।

( ३ ) सकलदेवतानां—इति कपु० ।

( ४ ) ॐकारादेतदन्यदित्यर्थः—इति खपु० ।

( ५ ) सच्चिदानन्दाख्याः—इति कपुस्तके नास्ति ।

र्थपुरःसरं जपेनोपासितव्यमित्यर्थः ।

तदेव तारतारकयोरैक्यमाह—अकार इत्यादिना ।

अकारः प्रथमाक्षरो भवत्युकारो द्वितीयाक्षरो भवति मकारस्तृतीयाक्षरो भवति अर्धमात्रश्चतुर्थाक्षरो भवति बिन्दुः पञ्चमाक्षरो भवति नादः षष्ठाक्षरो भवति तारकत्वात्तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि तदेव उपास्यमिति ज्ञेयम् । गर्भजन्मजरामरणसंसार-महद्भयात्सन्तारयतीति तस्मादुच्यते तारकमिति ।

'अकारः प्रथमाक्षरो भवति'—अकारः प्रणवावयवः, प्रथममक्षरं राममन्त्रस्य भवति । लिङ्गविपर्ययश्छान्दसः । तथा 'उकारो द्वितीयाक्षरो भवति' । उकारोऽप्यकारान्तर्गत एव बोद्धव्यो वासुदेवत्वात्(१) । 'मकारस्तृतीयाक्षरो भवति, अर्धमात्रश्चतुर्थाक्षरो भवति' । 'अर्धमात्र' इत्यवयवत्वेन पुँल्लिङ्गत्वम् । 'बिन्दुः पञ्चमाक्षरो भवति, नादः षष्ठाक्षरो भवति' सर्वार्थवाचकत्वात् । षण्णामपि षडवयवार्थवाचकत्वमिति सिद्धम् । एवमुभयोरेकार्थवाचकत्वेन संख्यासामान्येन च तादात्म्यमनुभूय सर्वावस्थास्वेतदेवोपासितव्यम् । तारस्य सिद्धादिदोषानुक्तेस्तारावयवानां मन्त्राक्षरैक्येन मन्त्रगत-

---

(१) उकारोऽप्यकारान्तर्गत एव बोद्धव्यो वासुदेवत्वात्—इति खपुस्तके नास्ति ।

सिद्धादिदोषनिरसनात् 'रुद्रस्तारकं ब्रह्म व्याचष्टे' इति स्वयमेव श्रुतिरधिकारितारतम्यचिन्तां झटिति साक्षात्कारफलाद्यर्थं परिहरति। एवं तारकत्वं सिद्धवत्कृत्य 'तारात्मत्वात् सर्वसंसारभयतारणाद्वे'ति गूढाभिसन्ध्याऽभिहितं पूर्वोक्तं हेतुद्वयं विवृण्वती तारकनिर्वचनमाह—तारकत्वात्तारको भवतीति। तारकत्वात्—तारकात्मकत्वादयं(१) मन्त्रस्तारको भवति। अतो मया यदुक्तं तदेव ज्ञातव्यं नान्यदित्याह—तदेव तारकं ब्रह्म त्वं विद्धीति। अन्यव्यावृत्त्यर्थमवधारणम्।

'नाऽनुध्यायात्(२) बहून् शब्दान् वाचो विग्लापनं हि तत्'

इति विजातीयश्रवणनिषेधात्। ज्ञात्वा च तदेवोपास्यमित्याह—तदेवोपास्यमिति ज्ञेयमिति। तदेव ज्ञेय(३)मुपास्यमिति योजना। अन्यमन्त्रवाक्यनिचयविचारणं विहाय तदेव तारकमेवोपासितव्यमिति। शिष्यशिक्षार्थमवधारणम्। एवं प्रथमहेतुं विविच्य द्वितीयमाह—गर्भजन्मजरामरणसंसारमहद्भयात्तारयतीति। यस्मादेवम्, तस्मादुच्यते-तारकमितीति।

किं तारकमिति प्रश्नस्योत्तरमुक्त्वा, किं तरतीत्याह—य इत्यादि आकण्डिकान्तम्।

य एतत्तारकं ब्राह्मणो नित्यमधीते स पाप्मानं तरति स मृत्युं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां

---

(१) रामात्मकत्वादयं--इति खपु०।

(२) अनुध्यायान्—इति खपु०।

(३) ज्ञेयं—इति नास्ति कपुस्तके।

तरति स वीरहत्यां तरति स संसारं तरति स सर्वं तरति सोऽविमुक्तात्माश्रितो भवति स महान् भवति सोऽमृतत्वं च गच्छति ॥

इति द्वितीयकण्डिका ।

य एतत्तारकं ब्राह्मणो नित्यमधीत इति । 'यो ब्राह्मणः 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्ये न तिष्ठासे'-दित्यादिश्रुत्युक्तो ब्राह्मणः, ब्रह्मबुभुत्सुरिति यावत् । एतत्तारकं नित्यमधीते- अर्थानुसान्धानेन केवलमपि वा नित्यं जपति, स पाप्मानं तरति । पाप्मन एव सप्त-विशेषणान्याह—'स मृत्युं तरति, स भ्रूणहत्यां तरति, स ब्रह्महत्यां तरति, स वीरहत्यां तरति, स सर्वहत्यां तरति, स संसारं तरति, स सर्वं तरति' तार-कब्रह्मा(१)ध्ययनेन पाप्मानं तीर्त्वा यत्प्राप्नोति तदाह— सोऽविमुक्तात्माऽऽश्रितो भवतीति । अविमुक्तस्य य आत्मा—स्वरूपं प्रथमकण्डिकोक्तं विशुद्धब्रह्मणः अवि-मुक्ताख्यकाश्या वा स्वरूपं—ब्रह्मात्मैक्यम्, तदेवाश्रित्य— अवलम्ब्य तिष्ठति । तारकब्रह्मोपासकस्य यतेर्ब्रह्माश्रय-णमेव भवतीति भावः । तदुक्तं भगवता(२)—'अनिकेतः स्थिरमति'रिति । 'अविमुक्तमाश्रितो भवती'ति पाठे-निरस्त-

(१) ब्रह्मध्यानेन-इति कपु० ।

(२) गीतासु-इति खपु० ।

समस्तोपाधिकं ब्रह्मात्मस्वरूपमविमुक्तशब्देन लक्षणयोच्यते, तमाश्रितो भवति । तद्रूपो भवतीत्यर्थः । स महान् भवति—त्रैलोक्यपूज्यो भवति । सोऽमृतत्वं गच्छति-निरावरणं कैवल्यमाप्नोति । अविमुक्तात्माश्रिताऽमृतत्वपदयोर्जीवन्मुक्तिविदेहमुक्ति(१)भेदेनाऽर्थभेदो ज्ञातव्यः । अस्य मन्त्रस्य महिमानं भगवान् भवानीवल्लभः प्रियः परमात्मा श्रीरामचन्द्र एव जानाति नेतरः । इतिशब्दः मन्त्रद्वयस्योत्तरद्वयसमाप्तौ ॥२॥

इति आनन्दनिधिटीकायां द्वितीयकण्डिका समाप्ता ।



(१) ०मुक्तिभेदो ज्ञातव्यः—इति कपु० ।

# अथ तृतीयकण्डिका ।

प्रथमकण्डिकया निर्दिष्टस्य तारकब्रह्मणः, तदनन्तरितया तारतारकैक्येन तत्स्वरूपं प्रदर्श्य, तृतीयया तस्य वाचकस्य वाच्यमर्थमभिनयन् वाच्यवाचकयोरैक्यं(१) कृतातिशयत्वेन स्वयमेवाह-याज्ञवल्क्यः । ननु किं तारकं किं तरतीति प्रश्नार्थनिरूपणेनोपक्षीणत्वाद्वाक्यस्यातोऽपृष्टमर्थकथनमकाण्डताण्डवितमनुसरति, वक्तव्यानामनन्तत्वात् । न, किं तारकमिति प्रश्नस्यैव शेषावशिष्टत्वात् । नहि वाच्यमर्थमन्तरेण वाचकस्य पर्यवसानं दृष्टं श्रुतं वा। अतस्तस्यैवार्थकथनमाह—अथेति ।

अथैते श्लोका भवन्ति ।

अकाराक्षरसम्भूतः सौमित्रिर्विश्वभावनः ।
उकाराक्षरसम्भूतं शत्रुघ्नस्तैजसात्मकः ॥
प्राज्ञात्मकस्तु भरतो मकाराक्षरसम्भवः ।
अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ॥
श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी ।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥
सा सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता ।
प्रणवत्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥

(१) ०रैक्यस्य-इति कपु० ।

अथ—तारकस्वरूपकथनानन्तरं तदर्थभूता एते—श्रुतिप्रसिद्ध(१)-वाक्यप्रमाणाश्चत्वारः श्लोका भवन्ति । अकारश्चासावक्षरं च तस्मात्सम्भूतः—सम्यग् जातः । अर्थसृष्टेः पश्चाद्भावित्वादकारेणाऽवभासितः अकारवाच्यः, अकारार्थ इति यावत् । सौमित्रिः—सुमित्रासुतः विश्वभावनः—जाग्रदवस्थानः, जागदवस्थायां विश्वं सङ्कल्पयतीति तथा । जाग्रदवस्थासाक्ष्यात्मा विश्व इत्यर्थः । तथा उकारार्थमकारार्थाऽर्धमात्रार्थाः स्वप्नसुषुप्तितुरीयसाक्षिणस्तैजसप्राज्ञानन्दाः शत्रुघ्नभरतरामा ज्ञातव्याः । तत्र ब्रह्मानन्दैकविग्रहः, ब्रह्म चासावानन्दश्च स एवैको विग्रहः—शरीरं यस्य स तथा । श्रीरामसान्निध्यवशात्—रामशब्दस्य श्रीपूर्वत्वं भक्त्यतिशयाधानार्थम् । रामसाक्षात्कारस्यैव परमपुरुषार्थत्वापत्तेः(२) । 'यो वा एतदक्षरं गार्ग्यविदित्वा अस्माल्लोकात्प्रैति स कृपणः' ।

किं तेन न कृतं पापं चौरेणाऽऽत्मापहारिणा ।
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥

इतिश्रुतिस्मृतिभ्यां पुरुषार्थाप्रयत्ने विनिन्दनश्रवणाच्च । तस्य ब्रह्मानन्दविग्रहस्य श्रीरामस्य सान्निध्यं नाम आश्रयः । लौकिकमायावत् स्वाश्रयाव्यामोहकत्वेन स्वस्य च जडत्वेन तदाश्रयणं तद्वशत्वं च नानुचितमतः सान्निध्यवशाच्चिदाभा-

---

(१) श्रुतिप्रसिद्धा वक्ष्यमाणा०—इति कपु० ।
(२) ०र्थतापत्तिः—इति खपु० ।

सत्त्वलाभात् । जगदाकारकारिणी, जगत आकारस्तं(१) करोतीति तथा । उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम्, सर्वेषां देहिनां—आकारितानां तेषामुत्पत्त्यादिकारिणी । या च (२)'मूलप्रकृतिरविकृति'रित्युक्तनाम्नी, सा सीता भवति ज्ञेया—सीतेति ज्ञेया भवति । प्रकृतिनिर्वचनमाह—प्रणवत्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिन इति ।'णुस्तुता'वित्यस्य धातोः प्रणूयते—प्रस्तूयते महदाद्याकारनिर्माणं यया सा प्रणवा तस्या भावस्तत्त्वम् तस्मात्प्रणवत्वात्, प्रकर्षेण क्रियतेऽनयेति प्रकृतिः, ब्रह्म—प्रणवमूलो वेदस्तद्वदनशीला विचारपराः वदन्ति—कथयन्ति । 'माया व्यक्तं प्रकृतिः सीते'ति पर्यायाः । तथाच श्रीरामायणे रामं प्रति कालोक्तमुपनिबबन्धाऽऽदिकविर्भगवान् वाल्मीकिः—

सङ्क्षिप्य हि पराँल्लोकानेकस्त्वं मायया सह ।
भार्यया शुभया देव्या मां त्वं पूर्वमजीजनः ॥

इति । जाग्रत्स्वप्नसुषुप्तितुरीयसाक्षित्वेनोक्तविश्वतैजसप्राज्ञेश्वराः सौमित्रिशत्रुघ्नभरतरामास्तेषामैक्येऽप्यनेकत्वकर्त्री सीता चेत्येतावानेव स्थूलसूक्ष्मसर्वप्रपञ्च ॐकारात्मकस्य तारकब्रह्मणोऽर्थ इति । उपसंहृताविति शब्दः ।

ननु 'अकाराक्षरसंभूत' इत्यादिना ॐकारस्यैवार्थः प्रदर्शितः, नतु षडक्षरतारकस्येति चेन्न, तारतारकयोरभेदप्रदर्शनात् । पूर्वं 'ॐकारात्मकत्वेन षडक्षरं तारकं ब्रह्म प्राधान्येनोपासितव्य-'

(१) जगदानन्दकारिणी जगत आनन्दस्तं—इति खपु० ।
(२) मूलप्रकृतिसंज्ञिता मूल०—इति खपुस्तकेऽधिकम् ।

मित्युक्तम्, इदानीं तारकपडक्षरात्मकत्वेन ॐकारमाधान्येने-त्युच्यते। तत्र ब्रह्मचर्यगृह(१)वानस्थाभिप्राय आद्यः मकारः। द्वितीयस्तु चतुर्थाश्रमाभिप्रायेण(२)।

इदानीं ॐकारोपासनया क्रमेण मुक्तिप्रकारमाह—ओमि-त्येतदक्षरं सर्वमित्यादिना यावत्काण्डिकासमाप्ति।

ओमित्येतदक्षरं सर्वं तस्योपव्याख्यानं भूतं भव्यं भविष्यदिति सर्वमोंकार एव। यच्चान्यत्त्रिकालातीतं तदप्योंकार एव। सर्वं ह्येतद् ब्रह्म, अयमात्मा ब्रह्म। सोऽयमात्मा चतुष्पाज्जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः।

ओमित्येतदक्षरं सर्वमिति। सर्वं—वाच्यमर्थजातं ॐ-इत्येतदक्षरं—ॐकाररूपमेवाक्षरम्। अक्षररूपश्रीरामपरमार्थ-प्रदत्वात्तदक्षरम्। सर्ववागात्मके ॐकारे भावाभावात्म-कसर्वार्थवाच्यवाचकत्वं नाऽसमञ्जसमिति भावः। 'वाग्वा ॐकार' इति, 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णा-न्येवमोंकारेण सर्वा वाक् संतृण्णे'ति च(३), 'ॐकारो वै सर्वा

(१) गृही—इति कपु०।

(२) चतुर्थाभिप्रायेण—इति कपु०।

(३) संतृणाति च—इति कपु०।

वाक्' इत्यादिश्रुतिभिः ॐकारस्य सर्ववागात्मकत्वमभिधीयते । ॐकारेणाऽवभास्यमानत्वात्सर्वं ॐकारात्मकमेवेति ज्ञाते सति कथं परमार्थावाप्तिरित्यत आह—तस्योपव्याख्यानमिति । तस्य—परमार्थप्रकाशकस्य ॐकारस्य उप—अक्षररूपश्रीरामप्रतिपत्त्युपायत्वादक्षररूपश्रीरामसामीप्येन व्याख्यानं—विस्पष्टं प्रकटकथनं, जानीयादिति शेषः । कथमित्यत आह—भूतं भव्यं भविष्यदिति सर्वं ॐकार एवेति । कालत्रयपरिच्छिन्नं समष्टिव्यष्ट्यात्मकं विराड्हिरण्यगर्भरूपं ॐकार एवेति । तर्हि कालत्रयातिक्रान्तस्य ॐकारात्मकत्वं न स्यादित्यत आह—यच्चान्यत्त्रिकालातीतं तदप्यॐकार एवेति । यच्चान्यत्त्रिकालातीतं—कार्यैकसमधिगम्यं कालत्रयाऽनाकलितं अव्याकृतादि, तदपि ॐकार एव । एवं(१) कार्यकारण(२)रूपस्य सर्वप्रपञ्चस्य वाच्यस्य वाचकत्वं ॐकारे प्रदर्शितम् । इदानीं वाच्यवाचकयोर्भेदात् परमार्थरूपश्रीरामावाप्तिर्न स्यादित्यतस्तयोरभेदं दर्शयति- सर्वं ह्येतद्ब्रह्मेति । सर्वं—कार्यकारणात्मकं वाच्यं वाचकं ॐकारं परादिवाक्चतुष्टयरूपं परमार्थभूतश्रीरामावभासकमक्षरं च । हि यस्मादित्यर्थे । एतदुक्तरीत्या नामरूपात्मकं शब्दसृष्ट्यर्थसृष्टिक्रमे (३) पूर्वं प्रदर्शितं ब्रह्म शुद्धे श्रीरामाख्ये ब्रह्मण्यारोपितम् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव

---

(१) एवं—इति कपुस्तके नास्ति ।

(२) कारणरूपजडस्य-इति कपु० ।

(३) शब्दसृष्ट्यर्थं सृष्टिक्रमेण-इति कपुस्तके ।

सत्य'मिति श्रुतेः।

ननु 'सर्वं ह्येतद्ब्रह्मे'त्यत्र 'सर्वं खल्विदं ब्रह्मे'त्यत्र च सर्वात्मकं ब्रह्मोच्यते। तत्किं सर्वं ब्रह्मेति सर्वमनूद्य ब्रह्मात्मताविधिः, अथवा ब्रह्माऽनूद्य सर्वात्मताविधिः? न प्रथमः, मिथ्यात्वेनाऽभिमतस्य सर्वस्य ब्रह्मात्मतायाम(१)मिथ्यात्वापत्तेः। नहि ब्रह्म मिथ्या। न द्वितीयः, ब्रह्मणो मिथ्यात्वापत्तेः। नहि मिथ्याभूतात्सर्वस्मादभिन्नम(२)मिथ्या भवितुमर्हति।

अत्रोच्यते—सर्वमनूद्य तस्य ब्रह्मात्मता विधीयते। नच ब्रह्मात्मतायां सर्वस्य (३)सत्यत्वापत्तिर्दोषाय। सर्वस्यापि ब्रह्मात्मना सत्यत्वस्येष्टत्वात्। तर्हि 'प्रपञ्चो मिथ्ये'ति वाचोयुक्तिरयुक्ता स्यादिति चेन्न, स्वरूपतो मिथ्यात्वस्य ब्रह्मरूपेण सत्य(४)भूतत्वेऽप्यप्रत्यूहत्वात्। नहि स्वरूपेण मिथ्याभूतमपि रजतं शुक्तिरूपेणापि मिथ्या भवति। ननु तर्हि 'सुवर्णं कुण्डल'मित्यत्रापि केनचिद्रूपेण सत्यत्वं केनचिद्रूपेण मिथ्यात्वमापद्येतेति चेन्मैवम्, वैषम्यात्। तत्र हि सुवर्णकुण्डलयोरन्यतरस्यापि बाधाभावा(५)द्विनैव बाधं सामानाधिकरण्यप्रयोगात्। 'सर्वं ब्रह्मे'त्यत्र च सर्वस्य स्वरूपतो बाध्यतया

---

(१) ॰मपि मिथ्यात्वापत्तेः—इति कपुस्तके।

(२) भिन्नं मिथ्या—इति कपुस्तके।

(३) सर्वस्यापि मिथ्यात्वा॰—इति कपुस्तके।

(४) सत्यत्वभूते—इति कपुस्तके।

(५) भावात्तेनैव—इति कपुस्तके।

बाधे सामानाधिकरण्यप्रयोगानुपपत्तिः । चोरः स्थाणुरिति-वत्। एतदेव श्रीरामपूर्वतापिनीये 'जीवत्वेनेदमों यस्ये'-त्यत्र विशदीकृतम् ।

नन्वात्मनो व्यतिरेकेण केवलस्वरूपनिरूपणेन परोक्षेण कथं परमार्थभूतरामावाप्तिः । नहि 'सौरं तेजो दहती'ति कथया पाकनिष्पत्तिर्दृष्टा, यावत् तन्मणौ(१) न स्फुरति । अतो 'गुड-जिह्विका'न्यायेन परमार्थापत्तिमाह—अयमात्मा ब्रह्मेति । पूर्वोक्तहेतो(२)रर्थोऽत्र द्रष्टव्यः । यस्मात्सर्वं ब्रह्म, तस्मात् अयं—'अयमहमस्मी'त्यनुभवगोचर आत्मापि ब्रह्म । नहि सर्वस्माद्भिन्नत्वेन(३) निष्कृष्य मौञ्जेषिकावत् पृथक् क्रियते आत्मा । नन्वात्मनः प्रत्यगात्मत्वेन सर्वस्य दृश्यत्वेन च *सर्वस्मात्पार्थक्यमात्मनः* श्रुतिस्मृतिपुराणेतिहासादिष्ववग-म्यत एव । सत्यम्, तत्केन वा नेत्युच्यते । व्यवहारमव-लम्ब्य प्रथमत आत्मनो ब्रह्मत्वं दर्शयितुं सर्वान्तःपातित्वमु-क्तम् । स्वरूपेण सर्वव्यति(४)रिक्त आत्मा त्विदानीं निरूप्यते । अतो न दोषावकाशः (५) । ननु पूर्णत्वाद्ब्रह्मण आत्मव्यतिरिक्ते यस्मिन् कस्मिन् वा विशेषे ब्रह्मसाक्षात्कारोदययत्नेनाऽलम्,

(१) पुस्तकद्वयेऽपि 'सन्मणौ' इति पाठश्चिन्त्य एव ।
(२) हेतुरर्थो०—इति खपुस्तके ।
(३) सर्वस्मादभिन्नत्वेन—इति कपु० ।
* एतच्चिह्नाङ्कितः पाठः कपुस्तके नास्ति ।
(४) ०व्याातिरिक्त—इति खपुस्तके ।
(५) अतो दोषानवकाशः—इति कपुस्तके ।

किमिति आत्मन्येवेत्याग्रहः । नायमाग्रहः तत्रैव न्याय्यत्वात् । 'अहमज्ञ' इत्यनुभवसिद्धात्मनि अज्ञानाध्यासनिरासप्रयत्नस्यैव प्राशस्त्यम् । नहि देवदत्ताऽऽन्ध्यनिरासाय यज्ञदत्ताऽञ्जनप्रयोगः । अत आत्मनोऽध्यस्तऽज्ञाननिरासोऽध्यासाधिष्ठानविकासश्चेत्युभयमभयदं भवतीति भावः ।

भवतु अयमात्मा ब्रह्म । तथापि ब्रह्मापरोक्षत्वं कथमागतमिति चेत्, उच्यते— अयमस्मीत्यनुभवादपरोक्ष आत्मैव । तदुक्तं भट्टपादैः—

इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥

इति । यदि परोक्षः स्यादात्मा तदा तस्य जडत्वेन प्रकाशत्वानुपपत्तौ जगदान्ध्यं प्रसज्येत ।

'अन्धस्येवाऽन्धलग्नस्य विनिपातः पदे पदे'

इति न्यायात् । अत आत्मनो ब्रह्मत्वे ब्रह्मणोऽपि पारोक्ष्यनिवृत्त्याऽपरोक्षत्वाप्तिर्निरायासत एवेत्यभिप्रायः । यद्यपि बृहत्त्वाद्बृंहणत्वाद्वा ब्रह्मपदार्थज्ञानमस्ति, अयमस्मीत्यात्मज्ञानमप्यस्ति । तथापि आत्मैव ब्रह्मेति ज्ञापयति शास्त्रम् । तदेव ब्रह्मात्मैक्यं(१) परमार्थश्रीरामावाप्तिरित्युक्तं भवति । अयमात्मा ब्रह्मेत्यनेन महावाक्येनोक्तमर्थं द्रढयितुम्—

'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते'

(१) तदेतद्ब्रह्मैक्यं—इति कपु० ।

इति न्यायेन तत्त्वं(१)पदार्थयोरुपास्योपासकयोरारोपापवाद-द्वाराऽखण्डैकरसशुद्धब्रह्मावाप्तिमाह—सोऽयमात्मा चतुष्पादिति। सः—पूर्वोक्तः अयमात्मा परावरत्वेन व्यवस्थितः चतुष्पात्—चतुश्चरणः कार्षापणवत्, न गौरिव चतुष्पात्। यथाहि—

'कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः'

इति मनूक्त्या कर्षेण—पलचतुर्थांशेन उन्मित(२)स्ताम्रविकारो माषषोडशात्मकः। स च पूर्वपूर्वपादानामुत्तरोत्तरमेलनेनैव कार्षापणसंख्यासंज्ञां लभते नान्यथा। तथा त्रयाणां विश्वादीनां पूर्वपूर्वविलापनेन(३) तुरीयस्य प्रतिपत्तिं गमयितुं करणसाधनः पादशब्दः। कथं चतुष्पात्त्वमित्यत आह—जागरितस्थान इत्यादिना चतुर्थं मन्यन्ते इत्यन्तेन। जागरितस्थानः, जागरितं स्थानमस्येति जागरितस्थानः बहिःप्रज्ञः—स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स बहिःप्रज्ञः। बहिर्विषये वा यस्य प्रज्ञा, विद्याकृताऽवभास इत्यर्थः। सप्ताङ्गः—सप्त मस्तकादीन्यङ्गानि यस्य स तथा। तान्येवोक्तानि वार्तिककृद्भिः—

शिरश्चक्षुर्मुखं प्राणो मध्यं बस्तिस्ततोऽप्यधः।
इत्यङ्गसप्तकं वैश्वानरोपास्तिश्रुतौ स्मृतम्॥

इति। तानि कानीत्युच्यते—'द्यौर्मूर्धा, चक्षुरादित्यः, अग्निर्मुखं, प्राणो वायुः, देहमध्यमाकाशः, बस्तिः समुद्रः, पृथिवी

---

(१) त्वंपदार्थतत्पदार्थयो०—इति खपु०।
(२) ०न्मितताम्रिको विकारः०—इति कपु०।
(३) पूर्वविलापनेन—इति खपु०।

पादा’विति। सप्तसु लोकेषु शिरआदीन्यङ्गानि यस्येति वा। एकोनविंशतिमुखः—पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणाः चत्वार्यन्तःकरणानि, एवं एकोनविंशतिः साधिदैवतानि नामरूपाश्रयक्रियासाराणि मुखान्युपलब्धिस्थानान्यस्येति एकोनविंशतिमुखः। श्रीनृसिंहपूर्वतापिनीये ‘प्रणवमङ्गं जानीया’दिति श्रुत्या मन्त्रराजाङ्गत्वं ॐकारस्याभिहितम्। तथैव श्रीमच्छङ्कराचार्यैर्व्याख्यातम्। नृसिंहोत्तरतापिनीये ‘देवा ह वै प्रजापतिमब्रुवन् अणोरणीयांसमात्मानं ॐकारं नो व्याचक्ष्वे’त्यनया श्रुत्या प्राधान्यमेव ॐकारस्याभिहितम्। माण्डूक्योपनिषदि प्रणवविद्यायाः स्वाधीनत्वात्(१) स्वाधीनत्वेन प्राधान्यं ॐकारस्योक्तम्। तथा श्रीरामपूर्वतापिनीये ‘जीवत्वेनेदमों यस्ये’त्यनया श्रुत्या श्रीतारकषडक्षरमन्त्रराजस्य पूर्वाङ्गत्वेनोत्तराङ्गत्वेन च ॐकारोपासना निरूपिता। अत्र श्रीरामोत्तरतापिनीये प्राधान्यं वाऽप्राधान्यं वा, प्राधान्याप्राधान्यं वा, अप्राधान्यं प्राधान्यं वा न तथोच्यते। किन्तु ॐकार एव षडक्षरं तारकं ब्रह्मोच्यते। अतो व्याख्याभेदे(२) च पाठभेदे च न्यूनातिरिक्तत्वे च छान्दोग्यादौ(३) ॐकारोपासनाभेदे वा अन्यथा प्रतिपत्तिर्न मन्तव्या। तथा स्थूलभुक्, स्थूलान् विषयान् प्राधान्येन स्वात्मसात्करो-

---

(१) स्वाधीनत्वात्–इति खपुस्तके नास्ति।

(२) वाक्याभेदे०–इति कपु०।

(३) छान्दोग्यात्––इति खपु०।

तीति स्थूलभुक् वैश्वानरः, विश्वेषां नराणां नयनाद्वैश्वानरः। स्थानादिपञ्चविशेषणविशिष्टो विराडकारार्थ इति यावत्। सप्ताङ्गवैश्वानरपदप्रक्षेपस्तु समष्टिव्यष्ट्यात्मनोरेकत्वप्रदर्शनार्थम्। अन्यथा अष्टाङ्गो विश्वश्चेति वक्तव्यम्, अग्रे तैजसादीनामुक्तत्वात्। तर्हि द्वितीयतृतीयपादयोर्हिरण्यगर्भाऽव्याकृतयोरनुक्तत्वात् समष्टिव्यष्ट्योरेकत्वभङ्गप्रसङ्ग इति चेन्न, यथा प्रथमपादे वैश्वानरो विश्वैक्यप्रदर्शनार्थस्तथैवाऽग्रिमपादद्वये तैजसप्राज्ञौ हिरण्यगर्भाऽव्याकृतैक्यप्रदर्शनपरावित्यवसेयम्। प्रथमः पादः। एतत्पूर्वकोत्तरपादाधिगमात्प्राथम्यम्।

द्वितीयमाह—

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः।

स्वप्नस्थानः, स्वप्नः स्थानमस्य तैजसस्येति स्वप्नस्थानः अन्तःप्रज्ञः, जाग्रत्प्रज्ञानेकसाधनबहिर्विषयेष्ववभासमाना (अन्तःप्रज्ञा) मनसि स्पन्दमाना सती तथाभूतं संस्कारं मनस्याधत्ते। तन्मनस्तथा संस्कृतं विचित्रपट इव बाह्यसाधना(१)नपेक्षाऽविद्याकर्मभ्यां प्रेर्यमाणं जाग्रद्वद्भवति। तथाच बृहदारण्यके 'अस्य लोकस्य सर्वावतो मात्रामुपादाये'त्यादिश्रुत्योक्तम्। (२) मनस्येकीभवतीति प्रस्तुत्य

---

(१) साधनापेक्षा—इति खपु०।

(२) अत्र 'परे देवे' इति खपुस्तकेऽधिकम्।

'अत्रैष देवः(१) स्वप्ने महिमानमनुभवती'त्यथर्वणे । इन्द्रियापेक्षया सूक्ष्मत्वान्मनसः तद्वासनारूपान्तर्लब्धप्रज्ञोऽन्तःप्रज्ञः । 'सप्ताङ्ग एकोनविंशतिमुख' इत्यङ्गमुखयोरुक्तन्यायेन वासनारूपमेवात्र बोद्धव्यम् । स्वप्ने वासनामययोः प्रतीयमानत्वात् । प्रविविक्तभुक्, प्रकर्षेण विविक्ते ततः केवलं वासनामयान्भोगान् भुनक्तीति प्रविविक्तभुक् तैजसः, जाग्रत्सुषुप्ती स्वतेजसा गच्छतीति तैजसः-उकारार्थः द्वितीयः पादः ।

त्रिष्वपि स्थानेषु तत्त्वाऽप्रतिबोधलक्षणस्य स्वापस्य तुल्यत्वादतः पूर्वाभ्यां सुषुप्तं विभजते तृतीयपादकथनार्थम्—

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ।**

यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति तत्सुषुप्तमिति । यत्र-यस्यामवस्थायां सुप्तः—निद्रितः पुमान् कञ्चन-कमपि कामं—विषयं न कामयते—आसक्तबुद्ध्या नाभिलषति, न कञ्चन स्वप्नं पश्यति-कमपि वासनामयभोगं नानुसन्धत्ते, तत्सुषुप्तं-सा सुषुप्तावस्था । तृतीयपादमाह—सुषुप्तस्थान इत्यादिना । सुषुप्तस्थानः, उक्तं सुषुप्तं स्थानमस्येति स तथा । अस-

(१) प्रत्युत पृषदेवः-इति कपु०, पषोदेव.-इति खपु० ।

त्कार्यत्वादस्याऽयुक्तत्वाद्विद्यमानमप्यत्र सप्ताङ्गत्वमेकोनविंशतिमुखत्वं च सन्मात्रान्न पृथग् विभाव्यत इत्याह—एकीभूत इति। किमात्मकोऽसावेकीभाव इत्याकाङ्क्षायां सन्मात्ररूपः प्रज्ञानात्मक इत्याह। प्रज्ञानघन एवेति। जाग्रत्स्वप्नप्रज्ञानानां घनत्वान्निबिडत्वात् सर्वरसानामिव सैन्धवखिल्ये प्रज्ञानघनः। एवकारेण जात्यन्तरप्रतिषेधः। अत एव एकत्वेन विशेषविज्ञानाभावात्। आनन्दमयः—आनन्दप्रायः। दुःखबीजस्य विद्यमानत्वादानन्द एवेति वक्तुं न युक्तम्। अनेन सच्चिदानन्दाऽऽभासग्रस्तान्तर्मुखसन्मात्ररूपब्रह्मज्ञानात्मकसामान्यशरीरप्रवेशोपायः प्रदर्शितः। विश्वतैजसयोरिवास्यापि भोग्यमाह—अत्यानन्दभुगिति। अतिशयेन आनन्दं भुनक्तीति तथा। यथा हि लोके निरीहः स्थितः सुखानन्दभुक् उच्यते, तथात्र स्वाभाविकपरमानन्दभोग उपपन्नः। केन कारणेन आनन्दभोग्य(१)त्वमत आह—चेतोमुख इति। *प्रज्ञानघनरूपोऽयं सुषुप्त आत्मेति कथमवगम्यते इति* चेत् (२), स्वप्नजाग्रत्प्रज्ञाकारणत्वादित्याह(३)—चेतोमुख इति, चेतः—चित्प्रतिबिम्बसहिता विद्यावृत्तयो मुखं करणं यस्य स चेतोमुखः। 'आनन्दमयः अत्यानन्दभुक् चेतोमुख' इति त्रिभिः पदैः भोक्तृभोग्यकरणान्युच्यन्ते। स्वप्नादिप्रतिबोधे चेतः प्रति द्वारीभूतत्वात्तथा-

(१) भोग०—इति कपु०।

* चिह्नाङ्कितः पाठः खपुस्तके नास्ति।

(२) चेतः—इति खपु०।

(३) अत्र 'इत्याभासान्तरम्' इति पुस्तकद्वयेऽप्यधिकम्।

बोधलक्षणं वा चेतो मुखं-द्वारमस्य स्वप्नाद्यागमनं प्रतीति-चेतोमुखः ।

'अविद्यावृत्त्यवच्छिन्नचैतन्यं भोगसाधनम्'

इति वार्तिके । भूतभविष्यज्ज्ञानत्वात्सर्वविषयज्ञानत्वमस्यै-वेत्याह प्राज्ञ इति । सुप्तो (१) हि भूतपूर्वगत्या प्राज्ञ इत्युच्यते । अथवा प्रज्ञप्तिमात्र(२)मस्यैवाऽसाधारणरूपमिति प्राज्ञः । इतर-योर्विशिष्टमेव ज्ञानमस्ति । सोऽयं प्राज्ञो-मकारार्थस्तृतीयः पादः।

असावेव सर्वस्य कारणमिति चतुर्थमाह(३)—एष सर्वेश्वर इत्यादिना ।

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् । नबहिःप्रज्ञं नान्तःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञं नाप्रज्ञं नप्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यते ।

एष सर्वेश्वरः, एष प्राज्ञ आत्मा स्वरूपावस्थः । अयमेव हि सर्वस्येश्वरः । यद्यपि प्राज्ञस्यापि सर्वेश्वर-त्वादिधर्मजातं युज्यते, तथापि सापेक्षत्वेन सबीजत्वेन च निरस्यते । तुरीयस्य तु निरपेक्षत्वान्निर्बीजत्वात् सर्वेश्वरत्वादि-

---

(१) सुषुप्तो हि—इति कपु० ।

(२) मात्रास्यैव साधारण०—इति कपु० ।

(३) कारण मित्याह०—इति खपु० ।

धर्मजातं सङ्गच्छत इति भावः। सर्वेश्वरत्वे हेतुमाह—एष सर्वज्ञ इति। अयमेव हि सर्वावस्थाभेदज्ञाता। सर्वेश्वरत्वेऽप्यन्तरेश्वरत्वं न स्यादित्यत आह—एषोऽन्तर्यामीति। स्वय(१)मन्तरनुप्रविश्य सर्वेषां भूतानां नियन्ता। बाह्याभ्यन्तरनियन्तृत्वे हेतुमाह—एष योनिः सर्वस्येति। यो यस्य कारणं स तस्य नियन्ता भवति। सर्वयोनित्वे हेतुमाह—प्रभवाप्ययौ हि भूतामिति। हि—यस्मात् भूतानामयमेव प्रभवाप्ययौ—उत्पत्तिप्रलयौ कृतवान्, तस्मात् सर्वयोनिः।

प्रथमद्वितीयपादे स्थानादीनि पञ्च विशेषणानि निरूपितानि। तृतीये षट्। चतुर्थे पञ्चविशेषणैरीश्वरत्वं प्रदर्शितम्। तदीश्वरत्वादिकं मायामात्रं विहाय शुद्धं स्वरूपमात्मनः पञ्चदशविशेषणैर्विशे(२)षितं शिवं चतुर्थपादमाह—नबहिःप्रज्ञमिति। बहिर्विषयव्यापारोपरमाद्विश्वसाक्षिणी जाग्रदवस्था प्रतिषिध्यते। तर्हि मनोव्यापारस्य दुर्वारत्वादन्तःप्रज्ञत्वं प्रसक्तम्, तन्मा भूदित्यत आह—नान्तःप्रज्ञमिति। अनेन तैजससाक्षिणी स्वप्नावस्था निषिध्यते। उभयव्यापारप्रतिषेधेन तदन्तरालव्यापारे प्राप्ते तन्निषेधति—नोभयतःप्रज्ञमिति। जाग्रत्स्वप्नान्तराले मनो व्यापृतं प्रज्ञार्थं(३) न कुर्यादित्यर्थः। अन्तरालप्रतिषेधेनोभयत्र युगपत्प्रज्ञार्थं व्यापारे प्राप्ते तन्निषे-

---

(१) अय०—इति कपु०।

(२) ०विशेषेण—इति कपु०।

(३) प्रज्ञानार्थे—इति कपु०।

धति-नप्रज्ञमिति। एवं सर्वतो मनोऽव्यापारप्रतिषेधादव्यापृतं(१) मनोऽविद्यात्मकं समवतिष्ठते, तत्स्थितिं प्रतिषेधति-नाप्रज्ञमिति। तत्र स्थितिप्रतिषेधादज्ञानासाक्षिकत्वे(२) प्राप्ते तन्निषेधति-नप्रज्ञानघनमिति। एभिः षड्भिः पदैः प्रतिषेधभूतैरुपास्यप्रतिकूलं प्रतिषिध्य यस्मिन्नुपास्ये मनो व्यापृतं(३) कार्यं तदुपास्यं निर्दिशति नवभिः पदैः-अदृष्टमिति दृष्ट्यविषयत्वाद्दर्शनायोग्यम्। 'यस्येन्द्रियस्य यो विषयस्तेनैव स ज्ञायते नान्येने'ति नियमात्। अत एव अव्यवहार्यम्। अत एव अग्राह्यम्। अत एव अलक्षणम्, न लक्षणं-लिङ्गं विद्यते यस्य तदलक्षणम्। अत एव अचिन्त्यं, अनुमानेन तर्केण वा। अत एव अव्यपदेश्यं, नियतोंकारोपास्यप्रतिपादकैः शब्दैः। अत एव एकात्मप्रत्ययसारम्, एकस्मिन् सर्वेषामात्मनां प्रत्ययः एकात्मप्रत्ययः स एव सारं यस्य तत्तथोक्तम्। यद्वा एक एव आत्मा उपास्योपासकयोरित्येव प्रत्ययः, शेषं पूर्ववत्। अत एव प्रपञ्चोपशमम्, प्रागुक्तन्यायेन मनसो हि बाह्यदर्शनस्मरणव्यापाराभावाद्व्यावृत्तत्वाच्च। स्वापाभावाच्च उपास्यव्यतिरेकेण प्रपञ्चाप्रतीतेः प्रपञ्चोपशममिति। शिवं-शङ्करम्, कथंभूतं अद्वैतम्-सजातीयविजातीयस्वगतभेदरहितं, अर्धमात्रं(४) नादात्मकं चतुर्थं-तुरीयं पादं मन्यन्ते। जाग्रदादिस्वरूप-

(१) ०दनृतं-इति कपु०।

(२) ०दज्ञानसाक्षिके स्वप्ने-इति खपु०।

(३) व्यावृत्तं-इति कपु०।

(४) ०मात्रानादा०-इति कपु०।

निरूणमाचार्योक्तमेवोच्यते—

जाग्रत्स(१)स्वगुणा भोक्ता केवलं शक्तिरूपिणी ।
मरणं विस्मृतिर्मूर्छा निद्रा च तमसाऽऽवृता ॥
सुषुप्तेस्तु कला ज्ञेया सुषुप्तिः शिवरूपिणी ।
संयोगः सत्त्वतमसो रंज इत्यभिधीयते ॥
सुषुप्त्यन्ते जागरादौ स्वप्नावस्था रजोमयी ।
सुषुप्त्यादौ जागरान्ते स्फुरत्तामात्रलक्षणा ॥
अवस्थाशेषतां प्राप्ता तुर्या तु परमा कला ।
चूतरम्भादिफलवत्पाकात् कैवल्यदायिनी ॥

तथाच वार्तिके—

विराट् हिरण्यगर्भश्च(२) कारणं चेत्युपाधयः ।
ईशस्य यत्रिभिर्हीनं तुरीयं तत्पदं विदुः ॥

इति । एतच्चोपास्यं श्रीरामाख्यं वस्तु प्रत्यगात्मतयोपास्यमित्याह—स आत्मा विज्ञेय इति ।

स आत्मा विज्ञेयः सदोज्ज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति सम्भाव्योऽहमों तत्सद्यत्परं ब्रह्म रामचन्द्रश्चिदात्मकः

---

( १ ) ०त्स्वप्न०—इति कपु० ।
( २ ) विश्वो विराट् हिरण्यश्च—इति कपु० ।

सोऽहमों तद्रामभद्रः परंज्योतीरसोऽहमित्यात्मानमादाय मनसा ब्रह्मणैकीकुर्यात् ।

सदा रामोऽहमित्येतत्तत्वतः प्रवदन्ति ये ।
न ते संसारिणो नूनं राम एव न संशयः ॥

इत्युपनिषद्य एवं वेद स मुख्यो भवतीति याज्ञवल्क्यः ।

इति तृतीयकण्डिका ।

स उपास्य आत्मा—श्रीरामः प्रत्यगात्मनि एवं विज्ञेयो—द्रष्टव्यः । 'आत्मन्येवाऽऽत्मानं पश्ये'दिति श्रुत्यन्तरात् । कथंभूतो विज्ञेय इत्याह—सदोज्ज्वल इत्यादिसप्तविशेषणानि । सदा उज्ज्वलः—दृश्यालिप्तः, अविद्यातत्कार्यहीनः—स्वरूपास्फूर्तिदुःखाद्यनुभवरहितः, स्वात्मबन्धहरः—स्वरूपप्रतिबन्धरहितः, सर्वदा द्वैतरहितः—दृश्यस्फुरणशून्यः(१) आनन्दरूपः—आनन्दगुणवान् न भवति । सर्वाधिष्ठानसन्मात्रः, सर्वस्याधि(२)ष्ठानं चासौ सन्मात्रश्च, निरस्ताऽविद्यातमोमोहः—माया मायाभासश्चेति मायाऽविद्येत्युच्यते । अविद्यातत्कार्यराहित्यं प्रथमतः, मायामायाकार्यराहित्यं पश्चादित्यपौनरुक्त्यम् । पूर्वपूर्वस्योत्तरोत्तरं यथेष्टं हेतुहेतुमद्भावः । एवं सप्तविशेषण(३)विशिष्ट आत्मा विज्ञेय इत्युक्तम् । स कथं

(१) ०हीनः—इति कपु० ।
(२) ०धिष्ठाता चासौ—इति कपु० ।
(३) विशेषण—इति कपुस्तके नास्ति ।

विज्ञेय इत्यत आह—अहमेवेति । सम्भाव्येति—उक्त आत्मा त्वहमेवेति सम्यक् भावयित्वा । सम्यक्पदेनोक्तां भावनां 'तत्त्वमसि, त्वं तदसी'तिवत् परस्परव्यत्ययेन दर्शयति—अहमों तत्सद्यत्परं ब्रह्मेति । ओमित्युच्चरन् अहं-उक्तस्वरूप आत्मा तत्-व्यापकं-सत्-सन्मात्रं यत्-प्रसिद्धं परं ब्रह्म वाङ्मनोऽगोचरम् । तत्किमित्यपेक्षायामाह—रामचन्द्रश्चिदात्मक-इति । अनेन ब्रह्मणः पारोक्ष्यनिवृत्त्यर्थं 'महं ब्रह्मास्मी'त्युक्तं भवति । एवं सति प्राप्तामशनायापिपासादिप्रसक्तिं वारयितुं पुनः ओमित्युच्चरन् सः अहम् । तच्छब्दपरामृष्टमर्थं पूर्वोक्तमनुवदति—तद्रामभद्रः परंज्योतीरस इति । तदादिविशेषणत्रयविशिष्टरामभद्रः परंज्योतीरसः—परमज्योतिःसारः अहं आत्मा । अनेन 'ब्रह्माऽहमस्मी'त्युक्तं भवति । एवं सति अशनायापिपासाद्यपरोक्षनिवृत्तिः स्वतः सिद्धैव, ब्रह्मणः अशनायादिरहितत्वात् । 'अशनायापिपासे शोकं मोहं जरामृत्युमत्येती'तिश्रुतेः । उक्तमर्थमुपसंहरति—इत्यात्मानमादाय मनसा ब्रह्मणैकीकुर्यादिति । इति—उक्तप्रकारेण आत्मानमादाय—आत्मानमात्मत्वेन ज्ञात्वा । मनसा—साधनेन 'मनसैवाऽनुद्रष्टव्य'मिति श्रुतेः । ब्रह्मणा-श्रीरामचन्द्रेण सह एकीकुर्यात्, ऐक्यं कुर्यादित्यर्थः । एतदेवाऽसकृदावर्तनीयमुपासकेनेत्याह—

सदा रामोऽहमित्येतत्तत्त्वतः प्रवदन्ति ये ।
न ते संसारिणो नूनं राम एव न संशयः ॥

इति । सदा—आसाक्षात्कारं रामोऽहमित्येतत् । तत्त्वत इति,

तस्य भावस्तत्त्वं तस्मात्तत्त्वतः । अयमर्थः- प्रथमतस्तु वैखरीं मध्यमायां विलाप्य, मध्यमां पश्यन्त्यां, पश्यन्तीं परायामित्येको योगः। सा परा ॐकारे, तं चोंकारं विभज्य अकार उकारे, उकारो मकारे, मकारोऽर्धमात्रायामिति द्वितीयः। ततः ॐकारार्थद्वयमधिदैवाध्यात्मरूपं प्रथमतः क्रमेण अकारोकारमकारार्धमात्रासु लक्ष्मणशत्रुघ्नभरतरामाः वैश्वानरहिरण्यगर्भाऽव्याकृतेश्वरापरपर्यायाः, ततो विश्वतैजसप्राज्ञतुरीया इति तृतीयो योगः। स च ॐ कारः सर्वे(?), तच्च सर्वमात्मन्यारोपितम्। स च आत्मा चतुष्पात्। तस्यात्मनो जाग्रदादिपादत्रयानुसन्धानेन एकत्वमवधार्य चतुर्थपादश्रीरामस्वरूपेणाऽवतिष्ठेदिति चतुर्थो योगः। एवं योगचतुष्टयरूपं तत्त्वं ये तत्त्वतः प्रवदन्ति। श्रवणमनननिदिध्यासनपरः प्रशब्दार्थः। ते संसारे वर्तमाना अपि प्रसुप्तपुरुषवदन्यैः संसारिण इव परिदृश्यमाना अपि नूनं—निश्चयेन ते न संसारिणः—राम एव ते, नात्र संशयः। संशयकर्तुर्नरकावाप्तिरेव फलं नान्यत्। 'संशयात्मा विनश्यती'ति स्मृतेः(१)।

ननु यदि ते श्रीरामः, तर्हि श्रीरामवत् सेतुबन्धनाद्यद्भुतदेवदुष्करकर्मसामर्थ्यं किमिति तेषु न दृश्यते। अतः संसारिण एवेत्युच्यते। श्रीरामे भगवति मायावैभवयोगबला(२)-

(१) स्मृतेः--इति नास्ति कपुस्तके।

(२) बलात्साधारण—इति कपु०।

ऽसाधारणसामर्थ्यं स्वाभाविकम् । 'मायिनं तु महेश्वर'मिति श्रुतेः । अविद्यावरणाविशिष्टे जीवे त्वसामर्थ्यम् । स्वकीयं मायाशाबल्यं परिहृत्य जीवस्य चाऽविद्याशाबल्यं परिहृत्य भक्तानुकम्पया शुद्धांशं ब्रह्मात्मैक्यं समर्पितम् । अतो मायामायाकार्याऽविद्याविद्याकार्यरहिताः शुद्धश्रीरामब्रह्मरूपा(१) एव जीवन्मुक्ताः संसारिभि(२)रनिर्धारितशीला विचरन्तीति नैष दोषः । तथा श्रीमद्भागवते(३)—

> न कुर्यान्न वदेत्किञ्चिन्न ध्यायेत् साध्वसाधु वा ।
> आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥

इति । ननु 'जीवन्मुक्तिर्नाम देहाभावो वा, सदेहस्य(४) भोगाभावो वा ? नाद्यः, विरोधात् । नहि देहवतो देहाभावसम्भवः । न द्वितीयः, भोगापरिहार्यत्वात् । नहि भोगकारणे विद्यमाने भोगविच्छेदः सम्भवति । ननु भोगस्तात्त्विकः, अतात्त्विको वा ? नाद्यः, अनिर्मोक्षप्रसङ्गात् । नहि तात्त्विकं श्रुत्यादिप्रमाणज्ञाननिरस्यम् । द्वितीयमङ्गीकुर्महे । भोगस्य आत्माऽज्ञानपरिकल्पितस्य आत्मज्ञानेन विच्छेदसम्भवात् ।

---

(१) ब्रह्माणि एव–इति खपु० ।
(२) ०भिर्निर्धारित—इति कपु० ।
(३) तदुक्तं श्रीभागवते–इति खपु० ।
(४) संभोगस्य–इति कपु० ।

तदिदं न समञ्जसम्। दिङ्मोहादेर्बाधितस्याप्यनुवृत्तिदर्शनात्। नहि काचकामलादिकारणे विद्यमाने पीतशङ्खाद्यदर्शनम्। अन्यथा देहवर्तनं (१) न स्यात्। अतो विदुषां जनकादीनां राज्यं श्रूयते। 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'-ति श्रुत्याऽपि देहवतो भोगाऽसम्भवो निरस्यते। अतोऽयुक्ता जीवन्मुक्तिरिति।

अत्रोच्यते—तत्त्वज्ञानोत्पत्तिर्जीवतो मृतस्य वा? नान्त्यः, शमदमादिपूर्वकश्रवणादिकारणानामसम्भवात्। अत आद्योऽङ्गीकार्यः। विदुषो याज्ञवल्क्यस्य जीवत एव संन्यासः श्रूयते, न मृतस्य। जीवतस्तत्त्वज्ञानोत्पत्तौ को लाभ इति चेत्, 'ज्ञानादेव तु कैवल्य'मिति(२) ब्रूमः। 'स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति ब्रह्मविदाप्नोति पर'मित्यादिश्रुतिभ्यः। तर्हि भोगसन्ततिर्दुर्निवारेति चेन्न, भोगस्यात्माऽज्ञानकल्पितत्वात्। कारणानां विद्यमानत्वे दिङ्मोहादिवदनुवृत्तिर्दृष्टेति(३) चेत्, दृश्यतां नाम। न(४) तथापि सुप्तोत्थितस्य स्वप्नव्यामोहवत्(५) प्रमाणजनितज्ञानेन बाधितानुवृत्तिः कार्यक्षमत्वं लभते। विदुषां जनकादीनां राज्यश्रवणं तु लोकसङ्ग्रहार्थम्।

---

(१) देहवानेव न स्यात्—इति कपु०।

(२) मुक्तिरिति—इति कपु०।

(३) पुस्तकद्वयेऽपि 'दर्शितेति' इति पाठो 'दृश्यता'मित्यनेन न सङ्गच्छते।

(४) न—इति नास्ति कपुस्तके।

(५) स्वप्नाद्यामोहवत्-इति कपु०।

ननु यदि ते विद्वांसः, तर्हि फलबाधनात्(१) सकलकर्मसंन्यासेनैवानुगृह्यताम्, नत्वग्निहोत्रादिनेति चेन्न। अयमाक्षेपस्तितन्तिणीन्यायमनुसरति। यस्य यादृक् प्रारब्धकर्मसंस्कारः, तस्य तादृगेव वर्तनम्। उत्पन्नेऽपि ज्ञाने तेषामनयैव नीत्या लोकसङ्ग्रहे क्रियमाणे नैष दोषः। 'न ह वै सशरीरस्ये'तिश्रुतेः का गतिरिति चेत्, तस्याः सामान्यविषयत्वेन विदुषः(इति) पदविशेषाश्रवणेन चाऽस्खलितगतिरेव। अतो जीवन्नेव मुक्तः, तस्य बाधितानुवृत्तिर्भवतीति युक्ता जीवन्मुक्तिः।

ननु 'नेति नेति नह्येतस्मादिति नह्यन्यत्परमस्ति नेह नानास्ति किञ्चने'त्यादिवाक्यसहित'तत्त्वमसि'महावाक्योत्पन्नज्ञानेन प्रपञ्चप्रविलयद्वारा ज्ञानोत्पत्तौ प्रपञ्चस्य प्रत्ययेन बाध्यतायां देहस्यापि प्रपञ्चान्तःपातित्वात् ज्ञानोदयसमनन्तरमेव शरीरप्रविलयः प्राप्त इत्यसिद्धा जीवन्मुक्तिरिति चेन्न, प्रारब्धकर्मवशात्तदनुवृत्तेः। ज्ञानोदयेन सकलकर्मक्षयेऽपि प्रारब्धकर्मसंस्कारवशात् कुलालचक्रभ्रमणवत् शरीरभ्रमणमिति जीवन्मुक्तिः सिद्धैव। अतो जीवन्मुक्तास्ते विचरन्ति। तथाच जाबालोपनिषच्छ्रुतिः—'तत्र परमहंसा नाम संवर्तकाऽरुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डकमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेद्यथा जातरूपधरो

(१) भोगना०-इति कपु०।

निर्द्वन्द्वो निष्परिग्रहस्तत्त्वंब्रह्ममार्गे सम्यक् सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्ष्यमाचरन्नुदरपात्रेण लाभालाभौ समौ कृत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्ष-मूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झर-स्थण्डिलेषु अनिकेतवास्यप्र(१)यत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नामे'ति। यद्वा लक्षणाऽलक्षिताः आरब्धकर्मसंस्कारसदृशाः (२)स्वच्छन्दा विचरन्ति। 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्ये न तिष्ठासेद्बाल्यं च पाण्डित्यं निर्विद्याऽथ मुनिरमौनं च मौनं च निर्विद्याऽथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवाऽतोऽन्यदार्त'मिति श्रुत्युक्ता(३) वा विचरन्ति। उपसंहरति—इत्युपनिषद्य एवं वेद स मुख्यो भवतीति याज्ञवल्क्य इति। एवंविधा उपनिषद्ब्रह्मविद्या तां यः—श्रीरामोपासकः एवं—उक्तप्रकारेण—वेद जानाति, स मुख्यो भवति—त्रैलोक्यपूज्यो भवति। स मुक्तो भवतीति वा पाठः। इति याज्ञवल्क्यः—एवं भरद्वाजमुपदिष्टवान् याज्ञवल्क्य इति॥ ३॥

इति आनन्दनिधिटीकायां तृतीयकण्डिका समाप्ता।

---

(१) प्रमत्तो—इति कपु०।

(२) लक्षणलक्षिताः प्रारब्धकर्मसंस्कारसन्देशा—इति कपु०।

(३) श्रुत्युक्तार्थेन—इति कपु०।

# अथ चतुर्थकण्डिका ।

प्रथमकण्डिकायां बृहस्पतिप्रश्नोत्तरे यत्तारकं ब्रह्म निर्दिष्टम्, द्वितीयायां भरद्वाजप्रश्नोत्तरे तारतारकैक्येन तत्स्वरूपं दर्शितम् । तृतीयायां तस्यार्थमुक्त्वा तेन वाच्येन वाचकैक्यं(१) निरूपितम् । तस्माद्ब्रह्मात्मैकस्य श्रीरामचन्द्रस्य (२) प्राप्तिः कथं भवतीति वक्तुं चतुर्थ्यारभ्यते । तत्र भरद्वाजाय ब्रह्मविद्यायां सर्वशास्त्रार्थभूतायां समापितायामत्योत्सुक्येनाऽत्रिः पृच्छति—

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति । स होवाच याज्ञवल्क्यः—सोऽविमुक्त उपास्यः । य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति । वरणायां नाश्यां च मध्ये प्रतिष्ठित इति ।का वै वरणा का च नाशीति । सर्वानिन्द्रियकृतान्दोषान् वारयतीति तेन वरणा भवतीति । सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नाशी भवतीति ।

---

(१) वाच्यवाचकैक्यं-इति कपु० ।

(२) तस्य ब्रह्मात्मैक्यस्य श्रीरामचन्द्रतत्त्वस्य-इति खपु० ।

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामितीति। 'यस्त्वया समनन्तरकण्डिकायां चतुष्पादात्मा उक्तः, तमात्मानमनन्तत्वादव्यक्तत्वात्कथमहं विजानीया'मिति प्रश्नार्थः। उत्तरमाह—स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्य इति। आत्मना न विमुक्तं अविमुक्तम्, सन्धि तुरीयमिति यावत्। तस्मिन्नुपास्यः—प्रत्यगात्मतयोपासनीयः। सर्वत्राऽवस्थितत्वादविमुक्त एवोपास्य इति कोऽयं नियमः इत्यत आह—य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इतीति। य इत्याद्यनूद्य सोऽविमुक्ते प्रतिष्ठित इत्यनन्तस्य व्यापकस्यापि तेजसोऽर्कमण्डलवदविमुक्त(१)सन्धौ प्रतिष्ठाऽवस्थानं युक्तमिति भावः। अनेनोपासनासौलभ्यं दर्शितम्। सोऽविमुक्तशब्दवाच्यः सन्धिरेव कथं ज्ञातव्य इति पृच्छति—सोऽविमुक्तः कस्मिन् प्रतिष्ठित इतीति। स्पष्टम्। उत्तरमाह—वारणायां नाश्यां च मध्ये प्रतिष्ठित इतीति। स्पष्टम्। पुनः पृच्छति—का वै वरणा का च नाशीतीति। स्पष्टम्। उत्तरमाह—सर्वानिन्द्रियकृतान् दोषान् वारयति तेन वरणा भवति, सर्वानिन्द्रियकृतान् (२)पापान्नाशयति तेन नाशी भवतीति। स्पष्टम्(३)।

(१) ०मुक्ते सन्धौ—इति कपु०। (२) दोषान्—इति कपु०।
(३) एतदग्रे 'सम्यक् धीयते निधीयते सृष्टिप्रलयादि सर्वमिति सन्धिः। उभयराहित्यर्षिवर्णविपर्ययश्छान्दसः'-इति खपु०।

पुनः पृच्छति—कतमच्चास्य स्थानं भवतीति ।

कतमच्चास्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति। एतद्वै सन्धिं सन्ध्यां ब्रह्मविद उपासते इति सोऽविमुक्त उपास्य इति । सोऽविमुक्तं ज्ञानमाचष्टे यो वैतदेवं वेदेति ।

अस्य—अविमुक्तस्य सन्धेरित्यर्थः । उत्तरमाह—भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति । *सम्यक् धीयते सृष्टिप्रलयादि सर्वमस्मिन्निति सन्धिः, उभयराहित्यमित्यर्थः* । भ्रुवोर्घ्राणस्य च यः सन्धिर्व्यष्टौ स्वदेहे, द्यौर्लोकस्यपरस्य च यः सन्धिः समष्टौ काश्यभिधे अविमुक्ते स एष त्वया पृष्टः सन्धिर्भवतीत्यन्वयः । एतदेवोपासनस्थानमिति सदाचारेण द्रढयति—एतद्वै सन्धिं सन्ध्यां ब्रह्मविद उपासत इतीति । एतत्—प्रसिद्धं सन्धिं, नपुंसकत्वमार्षम् । सन्ध्यां—सन्ध्योपासनं(१) ब्रह्मविदः—पूर्वोक्ता ब्रह्मात्मैकत्वज्ञाः उपासते—उपासनां कुर्वन्ति ।

---

* चिन्हाङ्कितः पाठः खपुस्तके नास्ति ।

(१) ०पासत—इति खपु० ।

निरुदका ध्यानसन्ध्या वाक्कायक्लेशवर्जिता।
सन्धिनी सर्वभूतानां सा सन्ध्या ह्येकदण्डिनाम्॥

इति स्मृतेः। उपसंहरति—सोऽविमुक्त उपास्य इतीति। यस्त्वया पृष्ट आत्मा 'ब्रह्मात्मैक्यं कथमहं विजानीया'मिति, स आत्मा अविमुक्ते—भ्रुवोर्घ्राणस्य च सन्धौ उपास्यः—सर्वदोपासनीयः। 'देवो (१) भ्रूमध्यगोचरः, भ्रूमध्ये संस्थितं देव'मित्यादिस्मृतिभ्यः। तथाच वसिष्ठः—

निद्रादौ जागरस्यान्ते यो भाव उपजायते(२)।
तं भावं भावयन् राम! जीवन्मुक्तः सदा भव॥
यदि देहं पृथक्कृत्य चिति विश्रम्य (३) तिष्ठसि।
अधुनैव सुखी शान्तो जीवन्मुक्तो भविष्यसि॥

इति। गोविन्दभगवत्पूज्यपादाचार्यैरपि गोविन्दभगवद्ग्रन्थे निरूपितम्—

भ्रूयुगमध्यगतं यच्छशि(४)विद्युत्सूर्यवज्जगद्भासि।
केषांचित्पुण्यवशादुन्मीलति चिन्मयं ज्योतिः॥
परमानन्दैकमयं(५) परमं ज्योतिःस्वभावमविकल्पम्।
विगलितसर्वक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम्॥
तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत्पश्यन्।

(१) दाता—इति खपु०।
(२) उपपद्यते—इति खपु०।
(३) विश्राम्य—इति कपु०।
(४) यच्छिखि—इति खपु०।
(५) ०रसज्ज्योतिःपरमस्वभाव—इति खपु०।

उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाप्नोति ॥
अस्तं हि यान्ति विषयाः प्राणास्त्वन्तः प्रशाम्यन्ति ।
न स्फुरिते दुःखसुखे चिद्बोध(वि?)ध्वस्तमोहानाम् ॥
रागद्वेषविमुक्ताः सत्याश्चाऽहन्तया रहिताः ।
सर्वत्र निर्विशङ्का भवन्ति चिद्ब्रह्मसंस्पर्शात् ॥
तिष्ठन्त्यणिमादियुता देहेऽस्मिन् लब्धसच्चिदानन्दाः ।
ब्रह्मस्वभावममृतं सम्प्राप्ताश्चैव कृतकृत्याः ॥
आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् ।
श्रेयः परं किमन्यत् शरीरमजरामरं विहायैकम् ॥

इति । सुरेश्वरवार्तिके च तथा—

अपामार्गलतेवायं (१) विरुद्धफलदो भवः ।
प्रत्यग्दृशां विमोक्षाय संसाराय पराग्दृशाम् ॥

इति । एतदेव अविमुक्ते प्रसिद्धे योजनीयम् । यज्ञदानादिभिर्बहुजन्मसुसम्पादितसुकृतसंस्कार(२)निचयखचितचरमशरीरस्य शमदमादिसाधनचतुष्टयसम्पन्नस्य पूर्वतापिनीयोक्तसगुणोपासनप्रसादलब्धचित्तस्थैर्यस्य श्रवणमनननिदिध्यासनजनितसाक्षात्कारानुभववैभवविलासनिरावरणकैवल्यावाप्तिसाकाङ्क्षमाणस्य(?) (३) सकलकर्मसन्न्यासपूर्वकदेहाभिमानगलितस्य यत्र कुत्रचिद्वर्तमानस्य भ्रुवोर्घ्राणस्य सन्धावविमुक्तोपासनं निर्गुणं श्रीरामो-

---

(१) ०मार्गरते वाच्यविरुद्ध—इति खपु० ।

(२) संस्काररचित—इति खपु० ।

(३) ०वद्याकाङ्क्ष०—इति खपु० ।

पासनाभिधेयमेवमुचितं नान्यदिति सर्वशास्त्रार्थपरिसमाप्तिः(१)। एवंभूतश्रीरामा(२)त्मोपासक एव त्रैलोक्यगुरुर्भवतीति। उपासनफलमाह—सोऽविमुक्तं ज्ञानमाचष्टे यो वैनदेवं वेदेति। यः—उपासकः, वै इति निश्चयेन(३) एतत्—उपासनं एवं—उक्तप्रकारेण वेद—जानाति, सः अविमुक्तं—तुरीयाख्यं सन्धि ज्ञानं आचष्टे—कथयति। तदुक्तं गीतासु—

'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः'

इति। शिक्षार्हस्य शिष्यस्याऽतिरहस्यत्वात्तत्क्षणमेव सङ्क्रमणेन बोधमुत्पादयतीत्यर्थः। सर्वत्र इतिशब्दाः प्रश्नसमाप्तौ तदुत्तरसमाप्तौ च ज्ञातव्याः।

शिष्यस्य संमुखीकरणाय आख्यायिकामाह—अथ तं प्रत्युवाचेति।

अथ तं प्रत्युवाच स्वयमेव याज्ञवल्क्यः—

श्रीरामस्य मन्त्रं काश्यां जजाप वृषभध्वजः।
मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः॥
ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम्।
वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वर॥

इति। स होवाच—

मणिकर्ण्यां मम क्षेत्रे गङ्गायां वा तटे पुनः।

(१) समाप्तौ—इति खपु०। (२) श्रीरामोपा०—इति खपु०।
(३) वै निश्चयं—इति खपु०।

म्रियते देहि तज्जन्तोर्मुक्तिं नाऽतो वरान्तरम् ॥

इति । अथ स होवाच श्रीरामः—

क्षेत्रेऽत्र तव देवेश यत्र कुत्रापि वा मृताः ।
कृमिकीटादयोऽप्याशु मुक्ताःसन्तु न चान्यथा ॥
अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये ।
अहं सन्निहितस्तत्र पाषाणप्रतिमादिषु ॥
क्षेत्रेऽस्मिन्योऽर्चयेद्भक्त्या मन्त्रेणानेन मां शिव ।
ब्रह्महत्यादिपापेभ्यो मोक्षयिष्यामि मा शुचः ॥
त्वत्तो वा ब्रह्मणो वापि ये लभन्ते षडक्षरम् ।
जीवन्तो मन्त्रसिद्धाः स्युर्मुक्ता मां प्राप्नुवन्ति ते ॥
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिव ॥

इति श्रीरामचन्द्रेणोक्तं योऽविमुक्तं पश्यति । स जन्मान्तरितान् दोषान् नाशयति ।

इति चतुर्थकण्डिका ।

तुरीयसन्धौ श्रुतायामपि श्रद्धावित्तरहितस्य बधिरार्पितगुह्यमिव भवतीति(१) । अथ–तदनन्तरं तं–अत्रिं प्रति उवाच स्वयमेव याज्ञवल्क्यः । किमुवाच, तदाह—श्रीरामस्ये·

---

(१) भवतीत्येतरतीति—इति कपु०

स्यादिना--'स्वच्चो वा ब्रह्मणो वाऽपि' इत्यनेन शिवादिब्रह्मादिसम्प्रदायद्वयं दर्शितम् । अन्यत् स्पष्टम् । ज्ञानसौलभ्यादविमुक्तसेवकस्य यदवान्तरफलम्, तदाह-श्रीरामचन्द्रेणोक्तमिति । 'जन्मान्तरिता'निति(१) प्रारब्धकर्मव्यतिरेकेण इहजन्मकृतकर्मोपलक्षणार्थम् । शेषं स्पष्टम् । अविमुक्तोपासनयाऽनायासतः श्रीरामसाक्षात्कारो यस्मात्, तस्मादविमुक्तत्यागे परमपुरुषार्थहानिः स्यादिति भावः (२) । तथाच ब्रह्माण्डे—

मोक्षं सुदुर्लभं ज्ञात्वा संसारं चाऽतिभीषणम् ।
अविमुक्तं समासाद्य तत्रैव निधनं व्रजेत् ॥

इति ।

अधिभूतं साधिदैवमध्यात्ममविमुक्तकम् ।
आत्मा काशी भ्रुवोर्मध्ये सौलभ्यं तूत्तरोत्तरम् ॥
समष्टिव्यष्टि(३)गं पूर्वं समष्टावेव चोत्तरम् ।
व्यष्टावेव तृतीयं स्यात् त्रिषु चैकं न संत्यजेत्(४) ॥

इति सङ्ग्रहः ॥ ४ ॥

इति आनन्दनिधिटीकायां चतुर्थकण्डिका समाप्ता ।

---

( १ ) जन्मान्तरितं प्रारब्ध-इति खपु० ।
( २ ) ०दित्यर्थः-इति खपु० ।
( ३ ) व्यष्टिकं-इति कपु० ।
( ४ ) सज्जगत्-इति खपु० ।

# अथ पञ्चमकण्डिका ।

'ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम्'

इति पूर्वोक्तं श्रुत्वा केन प्रकारेण भगवान् प्रसीदतीति तं प्रश्नं प्रष्टुं पञ्चमकण्डिकारम्भः । श्रीरामप्रसन्नकरणोपायं(१) पृच्छति, ईश्वरानुगृहीतस्य ब्रह्मविद्या(२)सम्भवात् । तदुक्तम्—

ईश्वरानुग्रहादेव पुंसामद्वैतवासना ।
महाभयपरित्राणाद्विप्राणामेव(३) जायते ॥

इति । अथेति ।

अथ हैनं भरद्वाजो याज्ञवल्क्यमुवाच—अथ कैर्मन्त्रैः स्तुतः श्रीरामः प्रीतो भवति स्वात्मानं दर्शयति, तन्नो ब्रूहि भगवन्निति । स होवाच याज्ञवल्क्यः—श्रीरामेणैवं शिक्षितो ब्रह्मा पुनरेतया गाथया नमस्करोति ।

विश्वाधारं महाविष्णुं नारायणमनामयम् ।
पूर्णानन्दैकविज्ञानं परंज्योतिःस्वरूपिणम् ।
मनसा संस्मरन् ब्रह्मा तुष्टाव परमेश्वरम् ॥

---

(१) प्रसन्नकारणाय—इति कपु० ।

(२) जपविद्या—इति कपु० ।

(३) ०द्विप्राणामुप०—इति खपु० ।

ॐ यो वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्दात्मा, यः परं ब्रह्म भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्चाऽखण्डैकरसात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च ब्रह्मानन्दामृतं भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यस्तारकं ब्रह्म भूर्भुवस्स्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च ब्रह्मा विष्णुरीश्वरो यः सर्वदेवात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये सर्वे वेदाः साङ्गाः सशाखाः सपुराणा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यो जीवात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च सर्वभूतान्तरात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये देवासुरमनुष्यादिभावा भूर्भुवस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये मत्स्यकूर्माद्यवताराः भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च प्राणो भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् योऽन्तःकरणचतुष्टयात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च यमो भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्चान्तको भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च मृत्युर्भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्चामृतं भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यानि पञ्च महाभूतानि भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यः स्थावर-जङ्गमात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये पञ्चाग्नयो भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यः सप्तव्याहृतयो भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भवगान् या विद्या भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् या सरस्वती भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् या लक्ष्मीर्भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् या गौरी भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् या जानकी भूर्भुवःस्तस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यच्च त्रैलोक्यं भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च सूर्यो भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च सोमो भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यानि नक्षत्राणि भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये च नवग्रहा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये चाष्टौ वसवो भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये चाष्टौ लोकपाला भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये चैकादश रुद्रा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् ये द्वादशादित्या भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यच्च भूतं भव्यं भविष्यत् भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यो ब्रह्माण्डस्याऽन्तर्बहिर्व्याप्नोति विराट् भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यो हिरण्यगर्भो भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् या प्रकृतिर्भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्चोंकारो भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो श्रीरामचन्द्रः स भगवान् याश्चतस्रोऽर्धमात्रा भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च परमपुरुषो भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च महेश्वरो भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यश्च महादेवो भूर्भुवःस्वस्तस्मै वै नमो नमः।

ॐ यो वै श्रीरामचन्द्रः स भगवान् य ॐ नमो

भगवते वासुदेवाय महाविष्णुर्भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यः परमात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यो ज्ञानात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः ।

ॐ यो वै श्रीरामचन्द्रः स भगवान् यः सच्चिदानन्दाद्वैतैकरसात्मा भूर्भुवःस्वस्तस्मै वै नमो नमः ॥

इत्येतैर्ब्रह्मा सप्तचत्वारिंशन्मन्त्रैर्नित्यं देवं स्तौति तत्र तस्य देवः प्रीतो भवति, स्वात्मानं दर्शयति ।

तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति, सोऽमृतत्वं गच्छति सोऽमृतत्वं गच्छतीति ॥

इत्यथर्वणरहस्ये श्रीरामोत्तरतापनीयोपनिषत् समाप्ता ।

---

एते मन्त्राः श्रीनृसिंहपूर्वतापिनीये द्वात्रिंशद्व्यूहे तथा अथर्वणशिरसि रुद्रोपनिषदि अत्रापि नानापाठक्रमा दृष्टाः श्रीरामचन्द्रानुग्रहवद्भिर्बहुधा परिशोधिताः पाठक्रमभङ्गभयाल्लिखिता विज्ञेयाः । एभिस्तु सर्वात्मकत्वं श्रीरामचन्द्रस्योच्यते ।

तत्र तस्येति, तस्य-ब्रह्मणः। स देवं पश्यतीति, देवं-श्रीरामं साक्षादात्मनि कृपया बहिरपि च पश्यति। अमृतत्वमिति, मोक्षं गच्छति-प्राप्नोति। ग्रन्थसमाप्तिं दर्शयति-इत्यर्थषणरहस्ये श्रीरामोत्तरतापिनीयोपनिषत्समाप्तेति॥

संमन्त्र्यामलतारकेण (१) मनुना दिग्बन्धदृष्ट्या(२)ऽऽर्हिं या(३)
रुद्रोपेन्द्रमरुद्गणादिसहितै(४)र्गीर्या विरिञ्च्यादिभिः।
व्यक्ताऽऽनन्दवनोद्धृताऽऽशु परमानन्देन या सम्भृता
तामानन्दनिधिं निधाय हृदये नन्दन्तु रामप्रियाः(५)॥

यस्यां भक्तिर्विरक्तिर्विविधशमदमप्राप्तिरप्राप्तिरन्त(६)-
र्दुःखस्यैतानि रत्नान्यखिलसुकृतिनां यान्ति लाभाय भूमौ।
विद्याऽम्भोधिप्रवृद्धिप्रवरतरमहाबोध(७)चन्द्रोदयाद्या-
मानन्दाऽऽद्यां निधिं तां निदधतु हृदये तद्विदः सर्वकालम्॥

विश्वेशपादपद्मोत्थमकरन्दौघबिन्दुभिः।
रञ्जितायां सदा काश्यां टीकाऽऽनन्दवनैः कृता॥
यस्योपदेशदीधित्या तारकं ब्रह्म काशते।
काश्यां काशीनिवासाय नमस्तस्मै पिनाकिने॥

---

(१) सन्मन्त्रमलतारणेन-इति कपु०।
(२) दिक्स्वन्धदृष्ट्या-इति खपु०।
(३) पुस्तकद्वयेऽपि '०र्हयन्' इति पाठः, स चाऽसङ्गतो दृश्यते।
(४) ०महेन्द्रचन्द्रमरुतै०-इति खपु०।
(५) रामाशयाः-इति कपु०।
(६) ०रस्तदुख०-इति खपु०।
(७) वैध-इति खपु०।

नाहं मांसं नचाऽस्थीनि देहादन्योऽपरो ह्यहम् ।
इति भावानुरूपेण व्यवहारेण मुच्यते (१) ॥

इति श्रीरामचन्द्रचरणानुगृहीतपरमहंसपरिव्राजकाचार्य-आनन्दवनविरचिता श्रीरामोत्तरतापिनीयोपनिषदानन्दनिधिटीका समाप्ता ।

॥ समाप्तश्चाऽयं ग्रन्थः ॥



(१) पद्यमिदं खपुस्तके नास्ति ।

॥ श्रीः ॥

# श्रीरामतापिनीयोपनिषत्परिशिष्टम् *।

अथ हैनं भरद्वाजो याज्ञवल्क्यमुपसमेत्योवाच—श्रीराममन्त्रराजस्य माहात्म्यमनुब्रूहीति ।

स होवाच याज्ञवल्क्यः—

स्वप्रकाशः परंज्योतिः स्वानुभूत्येकचिन्मयः ॥
तदेव रामचन्द्रस्य मनोराद्यक्षरः स्मृतः ॥ १ ॥
अखण्डैकरसानन्दस्तारकब्रह्मवाचकः ॥
रामायेति सुविज्ञेयः सत्यानन्दचिदात्मकः ॥ २ ॥
नमःपदं सुविज्ञेयं पूर्णानन्दैकविग्रहम् ॥
सदा नमन्ति हृदये सर्वे देवा मुमुक्षवः ॥३॥ इति ।

य एतं मन्त्रराजं रामचन्द्रषडक्षरं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स ब्रह्मपूतो भवति

*श्रीमदानन्दवनीयव्याख्याविरहितोऽयं सङ्गृह्यते परिशिष्टभागो ग्रन्थस्य 'अडयार'पुस्तकालयप्रकाशितवैष्णवोपनिषत्पुस्तकानुसारिपाठप्रकल्पनया । तत्र च पुस्तके खण्डचतुष्टयात्मकमेतस्य पूर्वभागं प्रकल्प्य पञ्चमखण्डरूपेण सङ्कलितोऽयमंशः । अस्य किल परिशिष्टभागस्य दीपिकादिषु दृश्यमानानि पाठान्तराणि तु तत एवावगन्तव्यानि ।

स विष्णुपूतो भवति स रुद्रपूतो भवति स सर्वैर्देवैर्ज्ञातो भवति स सर्वक्रतुभिरिष्टवान् भवति तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि फलानि भवन्ति श्रीरामचन्द्रमनुस्मरणेन गायत्र्याः शतसहस्राणि जप्तानि फलानि भवन्ति प्रणवानामयुतकोटिजप्ता भवति दश पूर्वान् दशोत्तरान् पुनाति स पङ्क्तिपावनो भवति स महान् भवति सोऽमृतत्वञ्च गच्छति । अत्रैते श्लोका भवन्ति—

गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः ॥
वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिकः ॥ ४ ॥
गाणपत्यादिमन्त्रेषु कोटिकोटिगुणाधिकः ॥
मन्त्रस्तेष्वप्यनायासफलदोऽयं षडक्षरः ॥ ५ ॥
षडक्षरोऽयं मन्त्रःस्यात् सर्वाघौघनिवारणः ॥
मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः ॥ ६ ॥
कृतं दिने यद् दुरितं पक्षमासर्तुवर्षजम् ॥
सर्वं दहति निःशेषं तूलाचलमिवानलः ॥ ७ ॥
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ॥
स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ॥ ८ ॥
कोटिकोटिसहस्राणि उपपातकजान्यपि ॥
सर्वाण्यपि प्रणश्यन्ति राममन्त्रानुकीर्तनात् ॥९॥

भूतप्रेतपिशाचाद्याः कूष्माण्डब्रह्मराक्षसाः ॥
दूरादेव प्रधावन्ति राममन्त्रप्रभावतः ॥ १० ॥
ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् ॥
कैवल्यं भगवत्त्वं च मन्त्रोऽयं साधयिष्यति ॥ ११ ॥
ग्राम्यारण्यपशुघ्नत्वं सञ्चितं दुरितं च यत् ॥
मद्यपानेन यत् पापं तदप्याशु विनाशयेत् ॥ १२ ॥
अभक्ष्यभक्षणोत्पन्नं मिथ्याज्ञानसमुद्भवम् ॥
सर्वं विलीयते राममन्त्रस्याऽस्यैव कीर्तनात् ॥१३॥
श्रोत्रियस्वर्णहरणाद् यच्च पापमुपस्थितम् ॥
रत्नादेश्चापहारेण तदप्याशु विनाशयेत् ॥ १४ ॥
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं हत्वा च किल्बिषम् ॥
सञ्चिनोति नरो मोहाद् यद्यत्तदपि नाशयेत् ॥१५॥
गत्वापि मातरं मोहादगम्याश्चैव योषितः ॥
उपास्याऽनेन मन्त्रेण रामस्तदपि नाशयेत् ॥ १६ ॥
महापातकपापिष्ठसङ्गत्या सञ्चितं च यत् ॥
नाशयेत् तत्कथाऽऽलापशयनासनभोजनैः ॥१७॥
पितृमातृवधोत्पन्नं बुद्धिपूर्वमघं च यत् ॥
तदनुष्ठानमात्रेण सर्वमेतद्विलीयते ॥ १८ ॥
यत् प्रयागादितीर्थोक्तप्रायश्चित्तशतैरपि ॥
नैवापनोद्यते पापं तदप्याशु विनाशयेत् ॥ १९ ॥

पुण्यक्षेत्रेषु सर्वेषु कुरुक्षेत्रादिषु स्वयम् ॥
बुद्धिपूर्वमघं कृत्वा तदप्याशु विनाशयेत् ॥ २० ॥
कृच्छ्रैस्तप्तपराकाद्यैर्नानाचान्द्रायणैरपि ॥
पापं च नापनोद्यं यत् तदप्याशु विनाशयेत् ॥२१॥
आत्मतुल्यसुवर्णादिदानैर्बहुविधैरपि ॥
किञ्चिदप्यपरिक्षीणं तदप्याशु विनाशयेत् ॥ २२ ॥
अवस्थात्रितयेष्वेवं बुद्धिपूर्वमघं च यत् ॥
तन्मन्त्रस्मरणेनैव निःशेषं प्रविलीयते ॥ २३ ॥
अवस्थात्रितयेष्वेवं मूलबन्धमघं च यत् ॥
तत्तन्मन्त्रोपदेशेन सर्वमेतत् प्रणश्यति ॥ २४ ॥
आब्रह्मबीजदोषाश्च नियमाऽतिक्रमोद्भवाः ॥
स्त्रीणां च पुरुषाणां च मन्त्रेणानेन नाशिताः ॥२५॥
येषु येष्वपि देशेषु रामभद्र उपास्यते ॥
दुर्भिक्षादिभयं तेषु न भवेत्तु कदाचन ॥ २६ ॥
शान्तः प्रसन्नवदनो ह्यक्रोधो भक्तवत्सलः ॥
अनेन सदृशो मन्त्रो जगत्स्वपि न विद्यते ॥२७॥
सम्यगाराधितो रामः प्रसीदत्येव सत्वरम् ॥
ददात्यायुष्यमैश्वर्यमन्ते विष्णुपदं च यत् ॥२८॥

तदेतदृचाऽभ्युक्तम्—

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।

यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः
दिवीव चक्षुराततम् ।
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते
विष्णोर्यत्परमं पदम् ॥
ॐ सत्यमित्युपनिषत् ॥

इति श्रीरामतापिनीयोपनिषत्परिशिष्टं समाप्तम् ।





|| श्रीः ||

पूजनयन्त्रगतानामावरणदेवतानां स्थाननियमस्य ग्रन्थकारेण ग्रन्थेऽस्मिन्ननुक्तावपि तेनैव रामार्चनचन्द्रिकायां तत्प्रदर्शनात् तदेव प्रमाणमङ्गीकृत्य कियतांऽशेनात्र प्रतीयमानं रामरहस्यादितो भेदमप्युपेक्ष्य तत्र तत्र स्थानेषु तास्ता आवरणदेवता विन्यस्ताः। अत्र च मूलोक्तावरणानां क्रमभङ्गे सम्भवत्यपि यन्त्रप्रदर्शितक्रमस्यैवौचित्येन ग्रन्थान्तरेष्वपि तथैवाऽवलोकनान्मूलक्रमस्याविवक्षितत्वं मन्तव्यम् ।

उद्धारानुरूपाऽऽकाराऽक्षरादिविन्यासविलसितं धारणयन्त्रं च टीकान्तरावलोकनेन क्वचित्सम्भवन्तं भेदमनङ्गीकृत्य प्रस्तुतव्याख्यानुसारेण विलिख्य प्रकाशितम्। यन्त्रेऽस्मिन् राशिवल्ल्यादिस्थलेषु शास्त्रोक्तानि तानि तानि तेषां स्वरूपाणि लेख्यानि । नागाः पुनस्तत्तद्वर्णकल्पनया स्वरूपेण विन्यसनीयाः ।

अत्र च समुपस्थिते राश्यादिस्थानविचारप्रसङ्गे समुपलब्धाद् वद्यनाथशुक्लप्रकटिताद् गुरुसम्प्रदायसिद्धरामयन्त्रोद्धारार्थसूचकपुस्तकान्महती सहायता समभवत् ।

यन्त्रद्वयेऽपि स्थलविशेषे संशयानेन इतस्ततो बहुगवेषणयाऽपि तत्र तत्र सुचिरं परिभ्रम्याऽपि मया कुतोऽपि महानुभावान्मनस्तोषकरं प्रमाणमनधिगतवता स्वीयविचारानुसारेण क्वचित्किमपि निश्चित्य सिद्धान्तितम्। मीमांसकैः पुनः साकल्येन केवलममुमेव पन्थानमनवलम्ब्य सम्यग् विचार्य रामयन्त्रं विलेखनीयमिति ।

॥ पूजनयन्त्रम् ॥



ध्रुव
धर
सोम
अप्
अनिल
अनल
प्रत्यूष
प्रभास
धातृ
विष्णु
मित्र
दिवाकर
नील
नल
पद्म
गद
वसिष्ठ
वामदेव
सनत्कुमार
हनुमत्
लक्ष्मण
शत्रुघ्न
भरत
सीता
राम
सुग्रीव
विभीषण
हनुमत्

श्रीः

# रामतापिनीयतत्तत्पुस्तकपाठानां सङ्ग्रहः* ।

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) तस्य ध्यानेन–क,घ (२) स्वस्य ध्यानेन–ख (३) तथा ध्यानेन–ग,ङ,च | ९ | १९ |
| (१) यस्य पूजनात्–क,घ (२) स्वस्य पूजनात्–ख,ग,ङ,च | ९ | १९ |
| (१) तथा रामस्य–क,ख,घ (२) तथा रात्यस्य–ग,ङ,च | ९ | २० |
| (१) ०नन्दाचिदा०–क (२) ०नन्दे चिदा०–ख,ग,घ,ङ,च | १४ | १ |
| (१) षडष्टासां–क,ख,घ (२) षडष्टानां–ग,ङ, च | २६ | ९ |
| (१) संज्ञकः–क,ख,घ,ङ (२) संज्ञितः–ग (३) संज्ञिकः–च | २८ | १ |
| (१) नैनं-क (२) नैवं–ख,ग,घ,ङ,च | २८ | २ |
| (१) कर्मैज्य–क,ङ, च (२) कर्मैति–ख,घ (३) कर्मैज्या–ग | ३३ | १९ |
| (१) जी॰त्वेनेदमो–क,ख,घ (२) जीवत्वेन समो–ग,ङ,च | ३६ | १३ |
| (१) महाद्रुमः–क,ख,घ (२) महान् द्रुमः–ग,ङ, च | ५२ | ११ |

* पाठार्थं धृतानि पुस्तकानि षट् । तत्र, कपुस्तकं प्रस्तुतमेव । खपुस्तकं–नारायणभट्टकृतदीपिकासंवलितं 'तिमिरनाशक'यन्त्रालये '१९४७' मिते वैक्रमेऽब्दे मुद्रितम् । गपुस्तकं–श्रीउपनिषद्ब्रह्मयोगिविरचितव्याख्यासंयुतं वैष्णवोपनिषत्सङ्ग्रहरूपं '१९२३' मिते ख्रीस्टाब्दे 'अडयार'पुस्तकालयतः अ० महादेवशास्त्रिणा सम्पादितम् । घपुस्तकं–'शास्त्रीलालदासजी'कृतया भाषाटीकया सहितं 'रणहरपुस्तकालय–डाकोर'तः '१९६४' संमिते विक्रमार्कवत्सरे प्रकाशितम् । ङपुस्तकं–'निर्णयसागर'यन्त्रालये '१९२५' परिमिते ख्रीस्टाब्दे ईशाद्यष्टोत्तरशतोपनिषन्नाम्ना मुद्रितम् । चपुस्तकं तावत्–'श्रीवेङ्कटेश्वर'यन्त्रालये '१९६६' संमिते विक्रमसंवत्सरे अष्टात्रिंशदुपनिषन्नाम्ना मुद्रितमिति ।

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) प्रहृतान्येव-क,ख,ङ, च (२) प्रहितान्येव-ग (३) प्रहृतान्येव-घ | ६९ | १७ |
| (१) जीववाचि-क,ख,घ (२) जीववाची-ग,ङ,च | ७३ | ८ |
| (१) चायेति कथ्यते-क,ख,घ (२) चायेति गीयते-ग (३) मायेति गीयते-ङ,च | ७३ | ९ |
| (१) नाम्ना-क,ख,घ,ङ,च (२) नाम्नो-ग | ७७ | १७ |
| (१) बीजशक्ती-क,ख,घ (२) बीजशक्ति-ग,ङ,च | ७८ | १५ |
| (१) कीलं-क (२) कीलो-ख,ग,घ,ङ,च | ७८ | १६ |
| (१) विनियोगतः-क (२) विनियोगवान्-ख,ग,घ,ङ,च | ७८ | १६ |
| (१) उत्पन्नं-क,ख,घ (२) उत्पन्नः-ग,ङ,च | ८० | ४ |
| (१) द्विभुजः-क,ग,घ,ङ,च (२) द्विभुजी-ख | ८० | १३ |
| (१) सर्वालङ्कारया-क (२) सर्वालङ्कृतया-ख,ग,घ,ङ,च | ८० | १६ |
| (१) तदा-क,ख,घ (२) तथा-ग,ङ,च | ८१ | ६ |
| (१) मन्त्रश्च यश्चा०-क (२) मन्त्रस्य तस्या०-ख (३) मन्त्रस्य यश्चा०-ग,घ (४) मन्त्रस्य यस्या०-ङ,च | ८१ | १६ |
| (१) रमाधराय-क,ग,ङ,च (२) रमाधाराय-ख,घ | ८२ | १५ |
| (१) रक्ष-क,ख,घ (२) रक्षां-ग,ङ,च | ८३ | ११ |
| (१) त्वमीश्वर्या-क,ग,घ (२) त्वमैश्वर्य-ख,ङ,च | ८३ | १२ |
| (१) स्वनिवृत्त्यर्थ-क,ख,ङ,च (२) स्वनिर्वृत्त्यर्थ-ग,घ | ८४ | ४ |
| (१) पूजितावीर-क,ख,घ (२) पूजितो वायु-ग,ङ,च | ८५ | २ |
| (१) तालान्-क,ख,घ (२) सालान्-ग,ङ,च | ८५ | २० |
| (१) वाली तदा-क,ख,घ (२) तदा वाली-ग,ङ,च | ८६ | ५ |
| (१) स्थापयेत्ततः-क,ख,ग,घ,च (२) स्थापयत्ततः-ङ | ८६ | ७ |
| (१) रामेण सह-क,ग,घ,ङ,च (२) रामाय स्वयं-ख | ८६ | १८ |
| (१) ०यास्त्रांश्च-क,ख,घ (२) ०यास्त्राणि-ग,ङ,च | ८७ | २ |

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) जंगाम ह-क,घ (२) जंगाम सः-ख,ग,ङ,च | ८७ | ११ |
| (१) यामे-क,घ (२) याम्ये-ख,ग,ङ,च | ८८ | १ |
| (१) धृतः-क,ख,घ (२) ततः-ग,ङ (३) धृतौ-च | ८८ | ७ |
| (१) त्रिकोणगम्-क,ख,ग,ङ,च (२) त्रिकोणकम्-घ | ८८ | ८ |
| (१) धृत्वा-क,ख,घ (२) तस्य-ग,ङ,च | ८८ | १७ |
| (१) संयुतम्- क (२) संयुतः-ख,ग,घ,ङ,च | ८९ | १ |
| (१) अकोपो-क,ख,घ (२) अशोको-ग,ङ,च | ८९ | ६ |
| (१) सुमन्त्रस्त्वेभि०-क (२) सुमन्त्रैरेभि०-ख (३) सुमन्त्रश्चैभि०-ग (४) सुमन्त्र एभि०-घ (५) सुमन्त्रश्चैभि०-ङ,च | ८९ | ६ |
| (१) ततः सहस्र-क,ग,घ,ङ,च (२) सहस्र-ख | ९१ | २ |
| (१) धर्मरक्षो-क,ख,घ (२) धर्मर्क्षो-ग,च (३) धर्मज्ञो-ङ | ९१ | २ |
| (१) वरुणानिलाः-क,ख,घ (२) वरुणोऽनिलः-ग,ङ,च | ९१ | २ |
| (१) ०स्त्वेभि०-क,ख,घ (२) ०श्चैभि०-ग,ङ,च | ९१ | ३ |
| (१) ०च्छुद्धवुद्धि०-क,ग,घ,ङ,च (२) ०द्बुद्धिवृद्धि०-ख | ९२ | ९ |
| (१) षडस्रेषु-क,ख,घ (२) षडश्रेषु-ग (३) षडस्रे तु-ङ,च | ९२ | १३ |
| (१) लिखेन्मन्त्र्य०-क (२) लिख्य मन्त्र्य०-ख,ग,ङ,च (३) लिखेन्मन्त्रा०-घ | ९२ | १९ |
| (१) सरोजे-क,ग,घ,ङ,च (२) सरोजं-ख | ९२ | २० |
| (१) चाष्टपत्रे च-क,ग,घ,ङ,च (२) ०ध्वष्टपत्रेषु-ख | ९३ | १ |
| (१) ०ष्टकस्तथा०-क,ग,घ,ङ,च (२) ०ष्टकं तथा-ख | ९३ | १ |
| (१) मनोर्वर्णान्-क,ग,घ,ङ, च (२) मन्त्रवर्णान्-ख | ९३ | २ |
| (१) ०क्षरानेवं-क,ख,घ (२) ०क्षराण्येवं-ग,ङ,च | ९३ | १२ |
| (१) ०ष्टार्णं लिख्य-क (२) ०ष्टार्णं लिखेत्-ख,घ (२) ष्टार्णान् लिख्य-ग,ङ,च | ९३ | १३ |

२४

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) तथों नमो-क,ख,घ (२) अथों नमो-ग,ङ,च | ९३ | २० |
| (१) लिखेत्तत्केसरे-क,घ (२) विलिखेत् केसरे-ख (३) लिख्य तत्केसरे-ग,ङ,च | ९४ | ५ |
| (१) हं सं भं वं लं शं जं-क (२) हं सं भृं वृं लं श्टं ज्टं-ख,घ (३) हं सं भ्रं व्रं लूं अं श्रं ज्रं-ग (४) हं सं भ्रं व्रं लूं मँ श्रं ज्रं-ङ (५) ह्रं सं भ्रं व्रं लूं मं श्रं ज्रं-च | ९४ | १८ |
| (१) मन्त्री प्र०-क (२) पत्रेषु-ख,ग,घ,ङ,च | ९५ | १४ |
| (१) च तद्बहिः-क,ख,ग,ङ, च (२) ततो बहिः-घ | ९५ | २० |
| (१) 'फणिसंयुतम्' इत्यनन्तरम् 'अनन्तो वासुकिश्चैव तक्षः कर्कोटपद्मकः। महापद्मश्च शङ्खश्च गुलिकोऽष्टौ प्रकीर्तिताः' ॥ पद्यमिदं ग,ङ,चपुस्तकेष्वधिकम् | ९६ | ८ |
| (१) कूटरेफा०-क,घ (२) कषरेफा०-ख (३) कूटो रे-फा०-ग,ङ,च | ९६ | ११ |
| (१) अन्त्याधीश-क,घ (२) अन्त्यार्घीश-ख,ग (३) अ-न्त्याङ्घ्रीश-ङ,च | ९७ | २ |
| (१)ऽधुनेरितः-क,ग,घ,ङ,च (२) ऽधुनेरिता-ख | ९७ | १० |
| (१) वह्निमेधा-क,घ,ङ (२ वह्निर्मेधा-ख,ग,च | ९८ | १ |
| (१) ०न्यथो दीर्घा समानदा-क,ख,घ (२) ०न्यतो दी-र्घसमायुता-ग (३) ०न्यथो दीर्घसमायुता-ङ,च | ९८ | २ |
| (१) ०न्यमोघा च-क,ख,ग,ङ,च (२) ०न्यथामोघा-घ | ९८ | ११ |
| (१) दीर्घा ज्वालिनी-क,ख,ग,घ(२) दीर्घज्वालिनी-ङ,च | ९८ | १२ |
| (१) ससूक्ष्मा-क,ख,घ (२) सुसूक्ष्मा-ग,ङ,च | ९८ | १२ |
| (१) क्ष्वेलः-क,ख,घ (२) क्ष्वेल-ग,ङ,च | ९९ | ५ |
| (१) पञ्चमो लान्त०-क,ख,ग,घ (२) पञ्चमूलान्त०-ङ (३)ऽपञ्चमूलान्त०-च | ९९ | १५ |

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) धान्त०–क,ख,घ (२) थान्त०–ग,ङ,च | ९९ | १५ |
| (१) कामिका रुद्र–क,ख,घ (२) कामका रुद्र–ग,ङ,च | १०० | १ |
| (१) स्थिरा स प–क,ख,घ (२) स्थिरा तपा–ग,ङ,च | १०० | १ |
| (१) ०रनिलोऽनन्तगोऽनलः–क,ख,घ (२) ०रनलोऽनन्तगोऽनिलः–ग,ङ,च | १०० | २ |
| (१) प्राणोऽम्भो–क,ख,ग,घ (२) प्राणाभो–ङ (३) प्राणोभो–च | १०० | ३ |
| (१) युतम्–क,ख (२) युतः–ग,घ,ङ,च | १०० | ३ |
| (१) पीता रति–क,ख,घ (२) पीताराति–ग,ङ,च | १०० | ४ |
| (१) युक्तस्ततो–क,ग,घ,ङ,च (२) युक्तोऽन्ततो–ख | १०० | ४ |
| (१) चत्वारिंशदर्णा–क,ख (२) चत्वारिंशद्वर्ण–ग,ङ,च (३) चत्वारिंशद्वर्णा–घ | १०० | १५ |
| (१) स्रगणुस्त्वयम्–क (२) सगुणः स्वयम्–ख (३) स्रङ्मनुः स्वयम्–ग (४) सगुणस्त्वयम्–घ (५) स्पृङ्मनुः स्वयम्–ङ,च | १०० | १७ |
| (१) अपुत्रिणां–क,ख,घ (२) अपुत्राणां–ग,ङ,च | १०१ | १२ |
| (१) एवं यन्त्रं समालिख्य–क (२) एवं यन्त्रं समाख्यातं–ख (३) इदं यन्त्रं समाख्यातं–ग,घ,ङ,च | १०२ | २ |
| (१) सुतूलिकायां-क,ग,घ,ङ,च (२) समानतूलिकायां-ख | १०४ | ४ |
| (१) चार्चयित्वा–क,ख,घ (२) ०मर्चयित्वा–ग,ङ,च | १०४ | ५ |
| (१) दिशादिकांश्च–क (२) देशादिकांश्च–ख,ग,घ,ङ,च | १०४ | १७ |
| (१) नत्रपूर्वा०–क,ख,ग,घ, (२) नत्वा पूर्वा०–ङ (३) नन्दीपूर्वा०–च | १०४ | १९ |
| (१) ०स्तांस्तस्य दिक्ष्व०–क,ख,घ (२) ०स्तांस्तत्तद्दिक्ष्व०–ग,च (३) ०द्यासु दिक्ष्व०–ङ | १०४ | १९ |

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) ०र्यंत्रमै०-क (२) ०र्युत्तमै०-ख,घ (३) ०र्यादिमै०-ग,ङ,च | १०५ | ६ |
| (१) ०रात्मानं च-क,ख,घ (२) ०रात्मानं वा-ग,ङ,च | १०५ | १९ |
| (१) ०व्यूहानिलजाद्यैश्च-क,ग,घ,ङ,च (२) व्यूहानि जलाद्यैश्च-ख | १०६ | ९ |
| (१) पूज्य तस्मै-क,ख,घ (२) पूज्यैस्तस्मै-ग,ङ,च | १०७ | ३ |
| (१) सम्यक्समर्प्य-क,घ (२) समर्प्य सम्यक्-ख (३) सम्यक् प्रकल्प्य-ग,ङ,च | १०७ | ४ |
| (१) गदारिशङ्खाब्ज-क,ग,ङ,च (२) गदादिशङ्खाब्ज-ख (३) गदाब्जशङ्खारि-घ | १०७ | १२ |
| (१) सर्वः-क,ग,घ,ङ,च (२) सर्वतः-ख | १०७ | १३ |
| (१) ऽथो तदानीं-क,ख (२) यस्तदानीं-ग,घ,ङ,च | १०७ | १८ |
| (१) सावृतिश्च-क (२) सावृतश्च-ख (३) सानुजश्च-ग,ङ,च (४) संवृतश्च-घ | १०८ | १ |
| (१) सपत्तनः सानुजः-क,घ (२) ससपत्तः सानुजः-ख (३) सपत्तनः सानुगः—ग,ङ,च | १०८ | २ |
| (१) कामप्रदाश्च-क (२) कामार्थदाश्च-ख,ग,घ,ङ,च | १०८ | ८ |
| (१) एवमेवैतद्याज्ञवल्क्य-क,ख,ग,ङ,च (२) एवमेवैतद्भगवन्निति याज्ञवल्क्यः-घ | ११८ | १५ |
| (१) भरद्वाजः-क,ख,ग,घ (२) भारद्वाजः-ङ,च | १२६ | ४ |
| (१) किं तरतीति-क,ख,घ (२) किं तारयतीति-ग,ङ,च | १२६ | ५ |
| (१) इत्यों तद्ब्रह्मात्मकाः-क,ख (२) इत्येतद्ब्रह्मात्मकाः-ग (३) इत्योमिति ब्रह्मात्मकाः-घ (४) इत्येतद्ब्रह्मात्मिकाः-ङ,च | १२६ | ७ |

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) तदेव उपास्य–क,ख,घ, (२) तदेवोपासितव्य–ग, ङ,च | १२ | ७ |
| (१) तारकमिति–क,ख,घ (२) षडक्षरं तारकमिति–ग, ङ,च | १३२ | ८ |
| (१) ब्राह्मणो–क,ख,घ (२) ब्रह्म ब्राह्मणो–ग,ङ,च | १३३ | १८ |
| (१) पाप्मानं–क,ग,घ,ङ,च (२) सर्वं पाप्मानं–ख | १३३ | १८ |
| (१) ०मुक्तात्माश्रितो–क,घ (२) ०मुक्तमाश्रितो–ख,ग,ङ,च | १३४ | २ |
| (१) अथैते–क,ख,घ (२) अत्रैते–ग,ङ,च | १३६ | १० |
| (१) ०दानन्ददायिनी–क,ख,घ (२) ०दाधारकारिणी–ग, ङ,च | १३६ | १५ |
| (१) भवति–क,ख,ग,ङ,च (२) भगवती–घ | १३६ | १७ |
| (१) संज्ञिता–क,ख,घ,ङ,च (२) संज्ञिका–ग | १३६ | १७ |
| (१) ०दक्षरं–क,घ (२) ०दक्षरमिदं–ख,ग,ङ,च | १३९ | ६ |
| (१) ०मयोऽत्यानन्दभुक्–क (२) ०मयो ह्यानन्दभुक्–ख, ग,घ,ङ,च | १४७ | १२ |
| (१) नबहिःप्रज्ञं नान्तःप्रज्ञं–क,घ (२) नान्तःप्रज्ञं नबहिः-प्रज्ञं–ख,ग,ङ,च | १४९ | ११-१२ |
| (१) 'नप्रज्ञानघनम्' इत्येतदग्रे 'नघनप्रज्ञं नप्रज्ञानम्' इत्यधिकं खपुस्तके | १४९ | १३ |
| (१) ०मदृष्ट–क,ख,घ (२) ०मदृश्य–ग,ङ,च | २४९ | १३ |
| (१) ०मचिन्त्य–क,ग,घ,ङ,च (२) ०मलिङ्गमचिन्त्य०–ख | १४९ | १३ |
| (१) शिव–क,ख,घ (२) शान्तं शिव–ग,ङ,च | १४९ | १४ |
| (१) विज्ञेयः–क,घ (२) स विज्ञेयः–ख,ग,ङ,च | १५२ | १५ |
| (१) सम्भाव्योऽहमों–क,ग,घ (२) सम्भाव्योऽहमित्यों–ख (३) सम्भाव्याहमों–ङ,च | १५२ | १८ |

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) भद्रः परं-क,ख,घ (२) भद्रपरं-ग,ङ,च | १५३ | १ |
| (१) ०ऽहमित्यात्मान०-क,ख (२) ०ऽहमोम् इत्यात्मान०-ग,घ,ङ,च | १५३ | १ |
| (१) ०मित्येतत्-क,ख,घ (२) ०मस्मीति-ग,ङ,च | १५३ | ३ |
| (१) मुख्यो-क (२) मुक्तो-ख,ग,ङ,च (३) विमुक्तो-घ | १५३ | ५ |
| (१) ०ऽव्यक्त आत्मा-क,ख,घ (२) ०ऽव्यक्तपरिपूर्णानन्दैकचिदात्मा-ग,ङ,च | १६० | ९ |
| (१) उपास्यः । य एषो-क,ख,ग,घ (२) उपास्योऽयम् । एषो-ङ,च | १६० | १० |
| (१) य एषोऽनन्तोऽव्यक्त-क,ग,घ,ङ,च (२) य एषोऽक्षरोऽनन्तोऽव्यक्तः परिपूर्णानन्दैकरसाश्चिदात्मा योऽयमनन्तोऽव्यक्त-ख | १६० | १०-११ |
| (१) नाश्यां-क,ख,घ (२)नास्यां-ग,ङ,च | १६० | १२ |
| (१) नाशीति-क,ख,घ (२) नासीति-ग,ङ,च | १६० | १३ |
| (१) सर्वानिन्द्रियकृतान्-क,ख,घ (२) जन्मान्तरकृतान् सर्वान्-ग,ङ,च | १६० | १४ |
| (१) नाशी-क,ख,घ (२) नासी-ग,ङ,च | १६० | १५ |
| (१) कतमश्चास्य-क,ङ,च (२) कतमं चास्य-ख,ग,घ | १६२ | २ |
| (१) 'स्वयमेव याज्ञवल्क्यः' इति ग,ङ,चपुस्तकेषु नास्ति | १६५ | १३ |
| (१) परमेश्वर-क,ग,घ,ङ,च (२) परमेश्वरः-ख | १६५ | १७ |
| (१) स होवाच-क,घ (२) अतः सत्यानन्दचिदात्मा श्रीराममीश्वरः पप्रच्छ-ख (३) अथ सच्चिदानन्दात्मानं श्रीराममीश्वरः पप्रच्छ-ग,ङ,च | १६५ | १८ |
| (१) ०कर्ण्यां मम क्षेत्रे-क,ग,ङ,च (२) ०कर्ण्यां वा मत्क्षेत्रे-ख (३) ०कर्णिकायां मत्क्षेत्रे-घ, | १६५ | १९ |

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| (१) क्षेत्रेऽत्र–क,ख,घ० (२) क्षेत्रेऽस्मिन्–ग,ङ,च | १६६ | ३ |
| (१) दोषान् नाशयति–क,घ० (२) दोषान् वारयति तान् पापान्नाशयति·ख 'योऽविमुक्तं पश्यति स जन्मान्तरितान् दोषान् नाशयति' इति ग,ङ,चपुस्तकेषु नास्ति | १६६ | १३-१४ |
| (१) भरद्वाजो–क,ख,ग,घ (२) भारद्वाजो–ङ,च | १६८ | ९ |
| (१) तन्नो–क,ख,घ (२) तान्नो–ग,ङ,च | १६८ | ११ |
| (१) श्रीरामेणैवं–क,ख,घ (२) पूर्वं सत्यलोके श्रीरामचन्द्रेणैवं–ग,ङ,च | १६८ | १२ |
| (१) ०रेतया गाथया–क,ग,घ,ङ,च (२) ०रेनया गदया–ख | १६८ | १२ |
| (१) विश्वाधारं महा०–क,ख. (२) विश्वरूपधरं–ग,ङ, च (३) विश्वंभरं महा–घ | १६८ | १४ |
| (१) ब्रह्मा–क,ख,ग,घ (२) ब्रह्म–ङ,च | १६८ | १६ |
| (१) ॐ यो वै श्रीरामचन्द्रः–क,घ (२) ॐ यो वै श्रीरामः–ख (३) ॐ यो ह वै श्रीरामचन्द्रः–ग,ङ,च ( एवमेव सर्वत्राऽग्रेऽपि ज्ञेयम् ) | १६९ | १ |
| (१) परमानन्दात्मा–क,ख,घ (२) परमानन्द आत्मा–ग,ङ,च | १६९ | १-२ |
| (१) यः परं ब्रह्म भूर्भुवःस्वस्तस्मै–क,ख,घ (२) यत्परं ब्रह्म भूर्भुवःसुवस्तस्मै–ग,ङ,च | १६९ | २ |
| (१) यश्च–क,ख,घ (२) यच्च–ग,ङ,च | १६९ | ५ |
| (१) यस्तारकं–क, (२) यश्च तारकं–ख,घ (३) यत्तारकं–ग,ङ,च | १६९ | ७ |
| (१) विष्णुरीश्वरो–क,ख,घ (२) विष्णुर्महेश्वरो–ग,ङ,च | १६९ | १० |
| (१) सर्वदेवात्मा- क,ग,घ,ङ,च (२) सर्ववेदात्मा–ख | १६९ | १० |
| (१) सपुराणाः–क,ख,घ (२) सेतिहासपुराणाः–ग,ङ,च | १६९ | १३ |

| पाठान्तराणि | पृष्ठानि पङ्क्तयः |
|---|---|
| (१) जीवात्मा-क,ख,घ (२) जीवान्तरात्मा-ग,ङ,च | १६९। १५-१६ |
| (१) यश्च सर्वं-क,ख,घ (२) यः सर्वं-ग,ङ,च | १६९　१७ |
| (१) ये मत्स्यकूर्माद्यवताराः-क,ग,ङ,च (२) यश्च मत्स्यकूर्माद्यवतारः-ख, घ | १७०　३-४ |
| (१) योऽन्तःकरण-क,ग,ङ,च (२) यश्चान्तःकरण-ख,घ | १७०　७-८ |
| (१) यश्चामृतं-क,ख,घ (२) यच्चामृतं-ग,ङ,च | १७०　१५ |
| (१) यानि-क (२) यानि च-ख,ग,घ,ङ,च | १७०　१७ |
| (१) जङ्गमात्मा-क,ग,ङ,च (२) जङ्गमात्मको-ख,घ | १७१　२ |
| (१) ये पञ्चा०-क,ग,ङ,च (२) ये च पञ्चा०-ख,घ | १७१　३ |
| (१) यः सप्त-क (२) यश्च सप्त-ख,घ (३) यः सप्तमहा०-ग,ङ,च | १७१　५ |
| (१) या सरस्वती-क,ग,ङ,च (२) या च सरस्वती-ख,घ | १७१। ९-१० |
| (१) या लक्ष्मीः-क,ग,ङ,च (२) या च लक्ष्मीः-ख,घ | १७१।११-१२ |
| (१) या गौरी-क,ग,ङ,च (२) या च गौरी-ख,घ, | १७१　१३ |
| (१) या जानकी-क,ग,ङ,च (२) या च जानकी-ख,घ | १७१।१५-१६ |
| (१) यश्च सूर्यो-क,ख,घ (२) यः सूर्यः-ग,ङ,च | १७२　१ |
| (१) यश्च सोमो-क,ख,घ (२) यः सोमः-ग,ङ,च | १७२　३ |
| (१) यानि-क (२) यानि च-ख,ग,घ,ङ,च | १७२　५ |
| (१) ये द्वादशा०-क, (२) ये च द्वादशा०-ख,ग,घ,ङ,च | १७२　१५ |
| (१) यो ब्रह्माण्डस्यान्तर्बहिर्व्याप्नोति विराट्-क (२) यश्च ब्रह्माण्डस्यान्तर्बहिर्व्याप्नोति विराट्-ख,घ (३) यद्ब्रह्माण्डस्य बहिर्व्याप्तम्-ग,ङ,च | १७३　१-२ |
| (१) यो हिरण्य-क,ग,ङ,च (२) यश्च हिरण्य-ख,घ | १७३　४-५ |
| (१) या प्रकृतिः-क,ग,ङ,च (२) या च प्रकृतिः-ख,घ | १७३　६-७ |
| (१) याश्चतस्रो-क,ग,ङ,च (२) यश्च चतस्रो-ख (३) | |

| पाठान्तराणि | पृष्ठानि | पङ्क्तयः |
|---|---|---|
| याश्च चतस्रो–घ | १७३ | १० |
| (१) यश्च परम–क,ख,घ (२) यः परम–ग,ङ,च | १७३ | १२ |
| (१) य ॐ नमो–क,ग,ङ,च (२) यश्चों नमो–ख,घ | १७३ | १८ |
| (१) 'ॐ नमो भगवते वासुदेवाय महाविष्णुः' इत्येक एव मन्त्रः क,ख,घपुस्तकेषूपलभ्यते (२) ग,ङ,चपुस्तकेषु तु 'वासुदेवाय' इत्यन्त एको मन्त्रः, 'यो महाविष्णुः' इति च मन्त्रान्तरं दृश्यते | १७४ | १ |
| (१) यः परमात्मा–क,ग,ङ,च (२) यश्च परमात्मा–ख,घ | १७४ | ३-४ |
| (१) यो ज्ञानात्मा–क (२) यश्च ज्ञानात्मा–ख,घ (३) यो विज्ञानात्मा–ग,ङ,च | १७४ | ५-६ |
| (१) यः सच्चिदानन्दाद्वैतैकरसात्मा–क (२) यश्च सच्चिदानन्दाद्वैतैकरसात्मा–ख,घ (३) यः सच्चिदानन्दाद्वैतैकचिदात्मा–ग,ङ,च 'यः सच्चिदानन्दाद्वैतैक' इत्येतस्मात् प्राक् 'ॐ यो ह वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्द आत्मा' इत्यधिकं ग,ङ,चपुस्तकेषु | १७४ | ७-८ |
| (१) इत्येतैर्ब्रह्मा सप्तचत्वारिंशन्मत्रैर्नित्यं देवं स्तौति तत्र तस्य देवः प्रीतो भवति–क० (२) अत्र 'तस्य' इति स्थले 'ततः' इति पदं घपुस्तके (३) एतान् ब्रह्मवित् सप्तचत्वारिंशन्मन्त्रैर्नित्यं देवं स्तुवन् ततो देवः प्रीतो भवति–ख (४) इति । तान् ब्रह्माब्रवीत्–सप्तचत्वारिंशन्मन्त्रैर्नित्यं देवं स्तुध्वम् । ततो देवः प्रीतो भवति–ग,ङ,च | १७४ | ९-१० |
| (१) सोऽमृतत्वं–क (२) सोऽमृतत्वं च–ख,ग,घ,ङ,च | १७४ | १२ |

इति ।

# गपुस्तकपाठान्तराणि उत्तरतापिनीयव्याख्यायाम् ।

| मुद्रितपुस्तकपाठाः | गपुस्तकपाठाः | पृष्ठानि | पङ्क्तयः |
|---|---|---|---|
| ०नासङ्गत्वेन निर्गुणत्वेन च | ०नासङ्गत्वेन च | ११५ | १–२ |
| षड्गुणैश्वर्यनिलयं | षड्गुणैश्वर्यसम्पन्नं | ११५ | ७ |
| ०नैकार्थ्येन निर्गुणे | ०नैकार्थ्येन सामानाधिकरण्येन निर्गुणे | ११६ | ३ |
| तत् शोधित | तदशोधित | ११८ | ५ |
| सामस्त्य | सामरस्य | ११९ | १ |
| प्राप्तेषु सत्सु लीनप्रायेषु सत्सु | प्राप्तेषु सत्सु | ११९ | ३ |
| विजातीयप्रयत्ना० | विजातीयप्रत्यया० | ११९ | १७ |
| सजातीयप्रयत्न | सजातीयप्रत्यय | ११९। | १७–१८ |
| द्वयशुद्धि ज्ञातवतः | द्वयज्ञानवतः | १२० | ४ |
| देवयजनं ब्रह्मा० | देवयजनं देवैरिन्द्रादिभिरपि देवः परमेश्वरो रामो यत्र इज्यते, यस्मिन् सर्वेषां भूतानां ब्रह्मादिस्थावरान्तानां ब्रह्मसदनं ब्रह्मा० | १२० | १२ |
| सम्पादतदु० | सम्पातवदु० | १२१ | १३ |
| गुणबीजं | गुरुबीजं | १२७ | २ |
| त्रिमात्रिकश्च | त्रिमातृकश्च | १२७ | ३ |
| शब्दसृष्ट्यादौ | शब्दसृष्ट्यर्थं सृष्ट्यादौ | १२७ | ११ |
| अगस्त्यसंहितायाम् | अगस्तिसंहितायाम् | १३१ | २ |

| मुद्रितपुस्तकपाठाः | गपुस्तकपाठाः | पृष्ठानि | पङ्क्तयः |
|---|---|---|---|
| विश्वं सङ्कल्पतीति | विश्वं भावयति सङ्कल्पयतीति | १३७ | ५–६ |
| पुरुषार्थाप्रयत्ने | परमपुरुषार्थाप्रयत्ने | १३७ | १६ |
| आत्मनोऽध्यस्ताऽज्ञान | आत्मनो ब्रह्मत्वे ब्रह्माध्यस्ताज्ञान | १४३ | ४ |
| ०त्युभयमभयदं | ०त्युभयमपीदं | १४३ | ५ |
| ब्रह्मपदार्थं | ब्रह्मेति ब्रह्मपदार्थं | १४३ | १७ |
| प्रज्ञा विद्याकृता० | प्रज्ञाऽविद्याकृता० | १४४ | १४ |
| स्वापाभावाच्च उपास्यव्यति० | उपास्यव्यति० | १५१ | १६ |
| सर्वे (?) | सर्वे | १५५ | ८ |
| भक्तानुकम्पया शुद्धांशं | भक्तानुकम्पया भगवता शुद्धांशं | १५६ | ३–४ |
| प्रमाणज्ञान | प्रमाणं ज्ञान | १५६ | १५ |
| फलबाधनात् | फलबोधनात् | १५८ | १ |
| श्रुतायामपि | श्रितायामपि | १६६ | १५ |

इति ।



# घपुस्तकपाठान्तराणि उत्तरतापिनीयव्याख्यायाम्*।

| मुद्रितपुस्तकपाठाः | घपुस्तकपाठाः | पृष्ठानि | पङ्क्तयः |
| --- | --- | --- | --- |
| कृशा | कृता | ११२ | २ |
| कर्मकाण्डदेवताकाण्डयोः | कर्मकाण्डज्ञानकाण्डदेवताकाण्डानां | ११३ | १० |
| ब्रह्मात्मैकत्वं प्रति श्रवणादिना | ब्रह्मात्मैकत्वश्रुतिश्रवणादिना | ११३ | १६ |
| व्याख्या युक्तिमती | व्याख्यातुं युक्तिः प्रतीयते | ११४ | १ |
| निर्गुणे | सामानाधिकरण्येन निर्गुणे | ११६ | ३ |
| परिवारित | परिवृत | ११६ | १४ |
| गन्यमानं आत्मानम् (?) | मन्यमानं च | ११८ | १ |
| रुत् | रुतं | ११९ | ६ |
| भेदात्पूर्वस्य हेतोर्यस्मादर्थस्य नान्वयः | अभेदात्पूर्वस्य हेतोर्यस्मादर्थस्यात्रान्वयः | ११९ | १५ |
| एवंगुणयाज्ञवल्क्यस्य बुद्धि | एवं गुरुणा याज्ञवल्क्यबुद्धि | १२० | १ |
| विहरतामविहारार्थे | विहरतो विहारार्थे | १२० | १० |
| तत्प्रज्ञाने | तत्प्राणेन | १२२ | ४ |
| सर्वमनूनां | पूर्वमनूद्य | १२७ | ४ |
| दीर्घ(?)द्वय | दीर्घखण्डद्वय | १२७ | ६ |

* श्रीमद्भिः विद्यानाथव्यासमहोदयैः स्वाभाविकप्रेमभावप्रदर्शनपुरःसरं श्रीरामोत्तरतापिनीयव्याख्याया हस्तलिखितमेकं पुस्तकं प्रदर्शितमिति तेभ्यो धन्यवादान् परःशतान् प्रदाय, घपुस्तकत्वेन सङ्केतितस्य तस्य पाठान्तराणि सङ्गृहीतानीह यथोचितम्। भूमिकामुद्रणोत्तरं पुस्तकमेतदुपलब्धमिति नैतदीयं नाम भूमिकायामुदलेखि।

